समूहः । निवहः । व्यूहः । संदोहः । विसरः । व्रजः । स्तोमः । ओघः । निकरः । व्रातः । वारः । संघातः । संचयः ॥ ३९ ॥ समुदायः । समुदयः । समवायः । चयः । गणः । संहतिः । वृंदं । निकुरंबं । कदंबकं । द्वाविंशतिः समूहस्य । तत्रसंहतिःस्त्रियां । "वारःसूर्यादिदिवसेद्वारेऽवसरवृंदयोः । कुब्जवृक्षेहरेवारोवारंमद्यस्यभाजनइतिविश्वप्रकाशः।" ॥ ४० ॥ वृंदभेदाः । समुदायविशेषावक्ष्यंतइतिशेषः समैः सजातीयैः प्राणिभिरप्राणिभिर्वासमूहो

**समूहोनिवहव्यूहसंदोहविसरव्रजाः ॥ स्तोमौघनिकरव्रातवारसंघातसंचयाः ॥ ३९ ॥ समुदायःसमुदयः समवायश्चयोगणः ॥ स्त्रियांतुसंहतिर्वृंदंनिकुरंबंकदंबकं ॥ ४० ॥ वृंदभेदाःसमैर्वर्गःसंघसार्थौतुजंतुभिः ॥ सजातीयैःकुलंयूथंतिरश्चांपुन्नपुंसकं ॥ ४१ ॥ पशूनांसमजोन्येषांसमाजोऽथसधर्मिणां ॥ स्यान्निकायः पुंजराशीतूत्करःकूटमस्त्रियां ॥ ४२ ॥**

वर्गइत्युच्यते । एकं । यथामनुष्यवर्गः । शैलवर्गः । सजातीयैर्विजातीयैरपिजंतुभिः प्राणिभिरेवसमूहः संघः सार्थइतिचोच्यते । द्वे यथापशुसंघः । वणिक्सार्थः । सजातीयैर्जंतुभिरेवकुलं यथाविप्रकुलं । एकं । तिरश्चामेवसजातीयानां समूहोयूथं । यथामृगयूथं । एकं ॥ ४१ ॥ पशूनामेववृंदं समजइत्युच्यते । एकं । अन्येषांपश्वतिरिक्तानांवृंदंसमाजः । यथाश्रोत्रियसमाजः । एकं । सधर्मिणां एकधर्मवतांसमूहोनिकायः । यथाश्रोत्रियनिकायः । पुंजः । "पिंजः ।" राशिः । उत्करः । कूटं । चत्वारि धान्यादिराशेः । "कूटंपुन्नपुंसकं ।" ॥ ४२ ॥

तद्गणेतेषांकपोतादीनांसमूहेकापोतादीनिस्युः । यथाकपोतानांसमूहः कापोतं । शुकानांसमूहः शौकं । एवंमयूराणांसमूहःमायूरं । तित्तिराणांसमूहो तैत्तिरं । कपोतादिभ्यः अनुदात्तादेरञ् । आदिशब्दात्काकमित्यादि । येगृहासक्ताः क्रीडार्थंपंजरादौस्थापिताइतियावत् । तेपक्षिमृगाः छेकागृह्यकाइतिचस्युः । द्वे । गृह्याएवगृह्यकाः स्वार्थेकन् ॥ इतिसिंहादिवर्गः ॥ ॥ ७ ॥ मनुष्याः । मानुषाः । मर्त्याः । मनुजाः । मानवाः । नराः । पुमांसः । पंचजनाः । पुरुषाः । पूरुषाः । नरः । एकादश मनुष्याणां । नृशब्दस्यैकवचनंतुना । पुमांसइत्यादि पंचकंतुपुंव्यक्तावपिप्रायेणप्रयुज्यते । य

**कापोतशौकमायूरतैत्तिरादीनितद्गणे ॥ गृहासक्ताःपक्षिमृगाश्छेकास्तेगृह्यकाश्चते ॥ ४३ ॥ इतिसिंहादिवर्गः ॥ ॥ ७ ॥ मनुष्यामानुषामर्त्यामनुजामानवानराः ॥ स्युःपुमांसःपंचजनाःपुरुषाःपूरुषानरः ॥ १ ॥ स्त्रीयोषिदबलायोषानारीसीमंतिनीवधूः ॥ प्रतीपदर्शिनीवामावनितामहिलातथा ॥ २ ॥**

थापुंस्कोकिलः ॥ १ ॥ स्त्री । योषित् । "जोषित् । जोषिता । योषितेत्यपि । स्त्रीवधूर्योषितांगनेतित्रिकांडशेषः ।" अबला । योषा । "जोषेतिचवर्गतृतीयादिः ।" नारी । सीमंतिनी । वधूः । प्रतीपदर्शिनी । वामा । वनिता । महिला "महस्योत्सवस्यइलाभूमिरितिविग्रहे महेला । महंउत्सवंलातीतिमहलापि ।" एकादशस्त्रियाः । स्त्रियौ । योषितौ । वध्वौ ॥ २ ॥

विशेषाः स्त्रीणांभेदावक्ष्यंतइतिशेषः । अंगनेत्येकंप्रशस्तांग्याः । एवंरामापर्यंतमेकैकं । तत्रभीरुर्भयशीला । " भीरूरितिदीर्घोकारांता । भीलुर्भीलू श्च ।" कामिनी कामयमाना । वामलोचना चारुनेत्रा । प्रमदा प्रकृष्टकामवेगा । मानिनी प्रणयकोपवती । कांता मनोहरा । ललनाललनयुक्ता । नितंबिनी ॥३॥ सुंदरी शोभनावयवा । " सुंदरापि" । रमणी रमयंती । "रमणापि" रामा रममाणा । कोपना । "कोपनी । कोपिनी ।" भामिनी । द्वेकोपशीलायाः । वरारोहा । "वरःआरोहोनितंबोस्याः" मत्तकाशिनी । "मत्तकासिनी ।" उत्तमा । वरवर्णिनी । "वरः वर्णोस्त्यस्याः" चत्वारिगुणैरुत्कृ

विशेषास्त्वंगनाभीरुःकामिनीवामलोचना॥ प्रमदामानिनीकांताललनाचनितंबिनी॥ ३॥
सुंदरीरमणीरामाकोपनासैवभामिनी॥ वरारोहामत्तकाशिन्युत्तमावरवर्णिनी॥ ४॥
कृताभिषेकामहिषीभोगिन्योऽन्यानृपस्त्रियः॥ पत्नीपाणिगृहीतीचद्वितीयासहधर्मिणी॥ ५॥

ष्टायाः स्त्रियाः । यद्वाउत्तमेतिनपर्यायः किंतुउत्तमास्त्रीसैतत्पर्याया ज्ञेयेतितदर्थः । शीतेसुखोष्णसर्वांगीग्रीष्मेयासुखशीतला । भर्तृभक्ताच यानारी विज्ञेयावरवर्णिनीतिरुद्रः ॥ ४ ॥ याकृताभिषेकानृपस्त्रीसामहिषीत्येकं । अन्याअकृताभिषेकानृपस्त्रियोभोगिन्यइत्युच्यंते । एकं । पत्नी । पाणिगृहीती । द्वितीया । "द्वयोः पूरणीद्वितीया । द्वितीयातिथिगेहिन्योद्वितीयःपूरणेद्वयोरितिहेमचंद्रः । " सधर्मिणी ॥ ५ ॥



भार्या । जाया । "जायतेऽस्यां । जायायास्तद्धिजायात्वंयदस्यां जायतेपतिरितिमनुः ।" दाराः । "दारयंतिभ्रातॄन् । दॄविदारणेणिजंतः ।" सप्त परिणीतायाःस्त्रियाः । तत्रदारशब्दोनित्यंपुंसिबहुवचनांतश्च । "दारशब्दष्टाबंतोपि । क्रोडाहारातथादारात्रयएतेयथाक्रमं । क्रोडेहारेचदारेषुशब्दाःप्रोक्तामनीषिभिरितिहेमचंद्रात् ।" पाणिर्गृहीतोऽस्याः पाणिगृहीती । ङीषंता कुटुंबिनी । पुरंध्री । "पुरंध्रिः" द्वे पतिपुत्रादिमत्याः । सुचरित्रा । स

भार्याजायाथपुंभूम्निदाराःस्यात्तुकुटुंबिनी॥ पुरंध्रीसुचरित्रातुसतीसाध्वीपतिव्रता॥ ६॥
कृतसापत्निकाऽध्यूढाऽधिविन्नाथस्वयंवरा॥ पतिंवराचवर्याथकुलस्त्रीकुलपालिका॥ ७॥

ती । साध्वी । पतिव्रता । चत्वारिपतिसेवातत्परायाः ॥ ६ ॥ कृतसापत्निका । अध्यूढा । अधिविन्ना । त्रीणिकृतानेकविवाहस्य । पुंसोयाप्रथमोढा स्त्रीतस्याः । कृतंसापत्निकंसपत्नीभावोस्याःसा । "कृतसापत्नकेतिपाठः ।" स्वयंवरा । पतिंवरा । वर्या । त्रीणिस्वेच्छयापतिवरणोद्युक्तायाः । स्वयं वृणुतेस्वयंवरा । कुलस्त्री । कुलपालिका । द्वेकुलवत्याः ॥ ७ ॥

कन्या । कुमारी । द्वे प्रथमवयसिवर्तमानायाः । गौरी । नग्निका । अनागतार्तवा । त्रीणिअदृष्टरजस्कायाः । अनागतं अप्राप्तंरजोयस्याःसा । अष्टवर्षाभवेद्गौरीदशमेनग्निकाभवेदितितस्यावांतरभेदः । मध्यमा । दृष्टरजाः । द्वे प्रथमप्राप्तरजोयोगायाः । तरुणी । तृप्लवनतरणयोः । चोरश्वलोवेत्यनन् । " तलुनी । तलूनः । पवनेयूनियुवत्यांतलुनीस्मृतेतिमेदिनी ।" युवतिः । "युवतीतिङीषंतेतिकेचित् । यूनीतिङीषंतोन्यत्र " द्वेमध्यमवयसिवर्तमानायाः ॥ ८ ॥ स्नुषा । जनी । "जनिः । " वधूः । त्रयंपुत्रादिभार्यायाः । "वधूःपत्न्यांस्नुषानार्योःस्पृक्कासारिबयोरपि । नवपरिणीतायांचेतिहे

कन्याकुमारीगौरीतुनग्निकाऽनागतार्तवा ॥ स्यान्मध्यमादृष्टरजास्तरुणीयुवतिः समे ॥ ८ ॥
समास्नुषाजनीवध्वश्चिरिंटीतुसुवासिनी ॥ इच्छावतीकामुकास्याद्वृषस्यंतीतुकामुकी ॥ ९ ॥

मात्वधूरित्येकं नवोढायाःस्त्रियाअपि ।" चिरिंटी । " चिरंटी । चिरंटीतुसुवासिन्यांस्याद्द्वितीयवयस्त्रियामितिविश्वप्रकाशः । " सुवासिनी । द्वे किंचिल्लब्धयौवनायां परिणीतायां । सुष्ठुवसतिसुवासिनी । "स्ववासिनीत्यपिपाठः । तत्रस्वेषुपित्रादिषुवस्तुंशीलमस्याइतिविग्रहः । स्ववासिन्यां चिरिंटीस्याद्द्वितीयेवयसिस्त्रियामितिरुद्रः ।" इच्छावती । कामुका । द्वे यभनादीच्छावत्याः । वृषस्यंती । कामुकी । द्वे " अश्ववृषवत् " मैथुनेच्छावत्यां ॥ ९ ॥



याकांतार्थिनी भर्तुः संकेतस्थानंगच्छतिसाऽभिसारिका । यदुक्तं । हित्वालज्जाभयेश्लिष्टामदेनमदनेनया। अभिसारयतेकांतंसाभवेदभिसारिकेति। एकं । पुंश्चली । धर्षिणी । " धर्षणी । कृषधातोरनिः कर्षणिः । " बंधकी । असती । कुलटा । इत्वरी ॥ १० ॥ स्वैरिणी । पांशुला । अष्टस्वैरिण्याः। याशिशुनारहिता सा अशिश्वी । एकं । निष्पतिसुतापतिपुत्ररहितासाअवीरा । एकं । " पतिपुत्रवतीवीरेतिनाममाला । " विश्वस्ता । विधवा ।

कांतार्थिनीतुयायातिसंकेतंसाऽभिसारिका ॥ पुंश्चलीधर्षिणीबंधक्यसतीकुलटेत्वरी ॥ १० ॥
स्वैरिणीपांशुलाचस्यादशिश्वीशिशुनाविना ॥ अवीरानिष्पतिसुताविश्वस्ताविधवेसमे ॥ ११ ॥
आलिःसखीवयस्याऽथपतिवत्नीसभर्तृका ॥ वृद्धापलिक्नीप्राज्ञीतुप्रज्ञाप्राज्ञातुधीमती ॥ १२ ॥

द्वे रंडायाः ॥ ११ ॥ आलिः । सखी । वयस्या । त्रयंसख्याः । " आलिःसखीसंतुरालिरालिरावलिरिष्यतइतिशाश्वतः ।" पतिवत्नी । सभर्तृका । द्वे जीवद्भर्तृकायाः । वृद्धा । पलिक्नी । द्वे पक्वकेश्यां । प्राज्ञी । प्रज्ञा । द्वे यायत्किमपिस्वयंप्रकर्षेण जानाति तस्याः । प्राज्ञा । धीमती । द्वे बुद्धिमत्याः ॥ १२ ॥

याशूद्रस्यभार्यासाविजातीयाऽपिशूद्रीत्युच्यते । एकं । तज्जातिः । शूद्रजातिः । "अन्यभार्यापि" शूद्रेत्युच्यते । आभीरी । महाशूद्री । द्वे गोपालिकायाः । जातिपुंयोगयोः । महाशूद्रस्यजातौ महाशूद्रस्यस्त्रीत्येवंरूपपुंयोगेच समा । उभयत्रापिनामद्वयंङीष्प्रत्ययांतमेवेत्यर्थः ॥ १३ ॥ अर्याणी आर्या । द्वे वैश्यजात्युत्पन्नायाः स्त्रियाः । स्वयंवैश्यजातिः भार्यातुयस्यकस्यचिदस्तुइत्यर्थोबोध्यः । एवंक्षत्रिया । क्षत्रियाणी । द्वे स्वयंक्षत्रियजातिः भार्यातुयस्यकस्यचित् । उपाध्याया । उपाध्यायी । द्वे स्वयंयाअध्यापिका तस्यां । उपेत्याधीयतेतस्याः सकाशादित्युपाध्याया । पुराकल्पेतुनारी

शूद्रीशूद्रस्यभार्यास्याच्छूद्रातज्जातिरेवच॥ आभीरीतुमहाशूद्रीजातिपुंयोगयोःसमा॥ १३॥ अर्याणीस्वय
मर्यास्यात्क्षत्रियाक्षत्रियाण्यपि॥ उपाध्यायाप्युपाध्यायीस्यादाचार्यापिचस्वतः॥ १४॥ आचार्यानीतुपुंयोगे
स्यादर्यीक्षत्रियीतथा॥ उपाध्यायान्युपाध्यायीपोटास्त्रीपुंसलक्षणा॥ १५॥

णांव्रतबंधनमिष्यते । अध्यापनंचवेदानां सावित्रीवचनंतथेतिपाराशरमाधवीयेयमः । तथास्वतःस्वयं मंत्रव्याख्याकृदाचार्यास्यात् । एकं । त्रयमपिसमानार्थमित्येके ॥ १४ ॥ पुंयोगेआचार्यस्यस्त्रीत्येवंरूपेऽर्थेआचार्यानीत्येकं । आचार्यादणत्वंचेतिणत्वाभावः । तथाअर्यस्यस्त्रीत्यर्थेअर्यीत्येकं । एवंक्षत्रियस्यस्त्रीत्यर्थेक्षत्रियी । एकं । उपाध्यायानी । उपाध्यायी । द्वे उपाध्यायस्य भार्यायां । स्त्रीपुंसलक्षणा स्तनश्मश्रुरूपेणस्त्रीपुंसचिन्हेनयुक्तापोटेत्युच्यते ॥ १५ ॥



वीरपत्नी । वीरभार्या । द्वे वीरस्यभार्यायाः । वीरमाता । वीरसूः । द्वे वीरस्यमातरि । जातापत्या । प्रजाता । प्रसूता । प्रसूतिका । चत्वारि प्रसूतायाः । ॥ १६ ॥ यानग्निका नग्नास्त्री कोटवीत्येकं । "कोट्टवीत्यपि ।" दूती बाहुलकात्क्तिन् । दूतिः । संचारिका । द्वे दूतिकायाः । संचारयति प्रापयतिस्वामिसंदेशमितिसंचारिका । अर्द्धवृद्धाकाषायवस्त्राऽधवेतिविशेषणत्रयविशिष्टाया साकात्यायनीत्युच्यते । एकं । अर्द्धवृद्धेतिधर्मप्रधानत्वादर्द्धवृद्ध

वीरपत्नीवीरभार्यावीरमातातुवीरसूः॥ जातापत्याप्रजाताचप्रसूताचप्रसूतिका॥ १६॥
स्त्रीनग्निकाकोटवीस्याद्दूतीसंचारिकेसमे॥ कात्यायन्यर्द्धवृद्धायाकाषायवसनाऽधवा॥ १७॥
सैरंध्रीपरवेश्मस्थास्ववशाशिल्पकारिका॥ असिक्नीस्यादवृद्धायाप्रेष्यांतःपुरचारिणी॥ १८॥

त्वेनयुक्तेत्यर्थः ॥ १७ ॥ या परवेश्मस्था स्वतंत्राकेशप्रसाधनादिशिल्पकारिणीचेति विशेषणत्रयोपेता तस्यां सैरंध्रीतिनामैकं । "सैरंध्रीतीकारमध्यपाठः । उक्तंतुकात्येन । चतुःषष्टिकलाभिज्ञाशीलरूपादिसेविनी । प्रसाधनोपचारज्ञासैरंध्रीपरिकीर्तितेति ।" अवृद्धाप्रेष्यांतःपुरचारिणीतिचविशेषणत्रयोपेताया साऽसिक्नीस्यादित्येकं । प्रेष्यतेराज्ञीभिरितिप्रेष्या ॥ १८ ॥

वारस्त्री। गणिका। वेश्या। "मूर्द्धन्यमध्यपाठोपि।" रूपाजीवा। चत्वारिवेश्यायाः। "वारस्यवृंदस्यस्त्रीवारस्त्री।" रूपमाजीवोजीविकायस्याः सारूपाजीवा। सावेश्यागुणवत्त्वाज्जनैः सत्कृतासती वारमुख्यास्यात्। एकं। "वारेवेश्यावृंदे मुख्यावारमुख्या " कुट्टनी। शंभली। संभलीतितालव्यादिरपि। द्वे परनारींपुंसायोजयित्र्यां। "शंसुखंभलतेवदतीतिशंभली।" ॥ १९ ॥ विप्रश्निका। ईक्षणिका। दैवज्ञा। त्रयंशुभाशुभनिरूपिण्याः। रजस्वला। स्त्रीधर्मिणी। अविः। आत्रेयी। मलिनी। पुष्पवती ॥ २० ॥ ऋतुमती। उदक्या। अष्टरजस्वलायाः। स्त्रीधर्मोरजःसोऽस्तिअस्याःसास्त्रीधर्मि

वारस्त्रीगणिकावेश्यारूपाजीवाऽथसाजनैः॥ सत्कृतावारमुख्यास्यात्कुट्टनीशंभलीसमे॥ १९॥
विप्रश्निकात्वीक्षणिकादैवज्ञाथरजस्वला॥ स्त्रीधर्मिण्यविरात्रेयीमलिनीपुष्पवत्यपि॥ २०॥
ऋतुमत्यप्युदक्यापिस्याद्रजःपुष्पमार्तवं॥ श्रद्धालुर्दोहदवतीनिष्कलाविगतार्तवा॥ २१॥

णी। अविंस्त्रीधर्मिणींविद्यादितिकात्यः। "अवीतिदीर्घांतापि। आत्रेयीवदगम्यत्वादात्रेयी। आत्रेयिकेत्यन्यत्र। रजः। पुष्पं। आर्तवं। त्रीणिस्त्रीरजसः। ऋतुरेवार्तवंप्रज्ञाद्यण्"। श्रद्धालुः। दोहदवती। द्वे गर्भवशादन्नादिविशेषाभिलाषिण्याः। "दोहदंगर्भिण्यभिलाषोस्त्यस्याः" निष्कला। "निष्कली।" विगतार्तवा। द्वेहीनरजस्कायाः। "निर्गतंकलंशुक्रमस्याःनिष्कला।" ॥ २१ ॥



आपन्नसत्वा। गुर्विणी। अंतर्वत्नी। गर्भिणी। चत्वारिगर्भिण्याः। "अंतरस्त्यस्यां गर्भोऽतर्वत्नी।" गणिकादेर्गणेसमूहेगाणिक्यादि। यथागणिकानां समूहोगाणिक्यं। गर्भिणीनांसमूहोगार्भिणं। युवतीनांसमूहोयौवतं। एकैकं॥ २२॥ याद्विरूढा द्विवारंवृता तत्रपुनर्भूः। दिधिषूः। "दिधीषूः। दिधिषुरपि।" द्वेपूर्वमेकस्यभूत्वापुनरन्यस्यभवतीतिपुनर्भूः। "अक्षताचक्षताचैवपुनर्भूःसंस्कृतापुनरित्युक्तं। मनुस्तु। ज्येष्ठायांयद्यनूढायांकन्यायामूह्यतेऽनुजा। साचाग्रेदिधिषूर्ज्ञेयापूर्वातुदिधिषुर्मतेत्याह।" दिधिष्वौ। तस्याद्विरूढायाःपतिर्दिधिषुरित्युच्यते। एकं। "पुनर्भूःपतिरुक्तश्चपुनर्भूर्दिधिषूस्त

आपन्नसत्वास्याद्गुर्विण्यंतर्वत्नीचगर्भिणी॥ गणिकादेस्तुगाणिक्यंगार्भिणंयौवतंगणे॥ २२॥
पुनर्भूर्दिधिषूरूढाद्विस्तस्यादिधिषुःपतिः॥ सतुद्विजोग्रेदिधिषूःसैवयस्यकुटुंबिनी॥ २३॥
कानीनःकन्यकाजातःसुतोऽथसुभगासुतः॥ सौभागिनेयःस्यात्पारस्त्रैणेयस्तुपरस्त्रियाः॥ २४॥

थेत्येषोप्यूढंतइतिस्वामी।" सापुनर्भूर्यस्यद्विजस्यकुटुंबिनी कुटुंबंपुत्रादिपोष्यवर्गस्तद्वती सोग्रेदिधिषूरित्येकं। "अग्रेदिधिषुरितिह्रस्वांतोपि। दिधिषूःपरपूर्वाग्रेदिधिषुस्तत्पुरंध्रिकइतिनाममाला।" द्विजशब्देनवर्णत्रयस्यापिग्रहणं ॥ २३ ॥ कन्यकायाअनूढायाजातःसुतः कानीनइत्युच्यते। एकं। सुभगासुतः। सौभागिनेयः। द्वेसुभगापुत्रस्य। यः परस्त्रियाःसुतःपारस्त्रैणेयः। एकं॥ २४ ॥

पितृष्वसुः पितृभगिन्याः सुतःपैतृष्वसेयः । पैतृष्वस्रीयः । द्वे । मातृष्वसुः सुतोप्येवं । यथामातृष्वसेयः । मातृष्वस्रीयः । द्वे । विमाता मातुःसपत्नी तस्याः पुत्रोवैमात्रेयइत्युच्यते । एकं । "वैमात्रोप्यन्यत्र ।" ॥ २ ५॥ बांधकिनेयः । बंधुलः । असतीसुतः । कौलटेरः । कौलटेयः । पंच कुलटापुत्रस्य ॥ २ ६॥ यदितुसतीभिक्षुकीभिक्षार्थिनी तर्हितस्याआत्मजः कौलटिनेयः । कौलटेयः । द्वे कुलानिभिक्षार्थंअटति नतुजारार्थंतस्याः कुलटायाः पुत्रः कौलटिनेयः । इतरस्याः कौलटेरइतिभेदः । कुलंजनपदेगृहइतिविश्वः । आत्मजः । तनयः । सूनुः । सुतः । पुत्रः । पंचकंपुत्रस्य । "पुन्नाम्नोनरकाद्य

**पैतृष्वसेयःस्यात्पैतृष्वस्रीयश्चपितृष्वसुः॥ सुतोमातृष्वसुश्चैवंवैमात्रेयोविमातृजः॥ २५ ॥ अथबांधकिनेयः स्याद्बंधुलश्चासतीसुतः॥ कौलटेरःकौलटेयोभिक्षुकीतुसतीयदि॥२६॥तदाकौलटिनेयोऽस्याःकौलटेयोपिचात्मजः॥ आत्मजस्तनयःसूनुःसुतःपुत्रःस्त्रियांत्वमी॥२७॥ आहुर्दुहितरंसर्वेऽपत्यंतोकंतयोःसमे॥ स्वजातेत्वौरसौरस्यौतातस्तुजनकःपिता॥२८॥**

स्रात्पितरंत्रायतेसुतः॥ तस्मात्पुत्रइतिप्रोक्तःस्वयमेवस्वयंभुवेति ।" अमीआत्मजादयःसर्वेस्त्रियां वर्तमानाः ॥२७॥ दुहितरं आहुः । यथा । आत्मजा । तनया । सूनुः । सुता । पुत्री । दुहितेत्यपि ऋदंतं । अपत्यं । तोकं । द्वेतयोःसमे पुत्रेदुहितरिचक्लीबलिंगे एवेत्यर्थः । औरसः । उरस्यः । "औरस्यइत्यपि ।" द्वे स्वजातेसवर्णायामूढायांस्वस्माज्जाते पुत्रेनतुदत्त्रिमादौ । तातः । जनकः । पिता । त्रीणिपितुः ॥ २ ८॥



जनयित्री । "अंतर्भावितण्यर्थाज्जनित्री ।" प्रसूः । माता । जननी । "जननिः" चत्वारिजनन्याः । भगिनी । स्वसा । द्वे स्वसुः ॥ यापत्युःस्वसासानांदेत्येकं । ऋदंतमिदं । ननंदेत्यपि । ननांदातुस्वसापत्युर्ननंदानंदिनीचसेतिरभसः ।" नप्त्री । पौत्री । द्वे सुतस्यसुतायाश्चात्मजातत्र ॥ २ ९॥ भ्रातृवर्गस्यभार्याःपरस्परंयातरःस्युः । एकं । प्रजावती । भ्रातृजाया । द्वे भ्रातुर्जायायां । मातुलानी । मातुली । "मातुलेत्यपि" द्वेमातुलभार्यायाः ॥ ३ ०॥ पत्युः पत्न्याश्चप्रसूर्माताश्वश्रूरित्युच्यते । एकं । तयोःपतिपत्न्योः पिताश्वशुरइत्युच्यते । "श्वश्रूशिशुश्वशुराइतिशभेदाद्वितालव्यः ।" एकं पितुःभ्राता

**जनयित्रीप्रसूर्माताजननीभगिनीस्वसा॥ ननांदातुस्वसापत्युर्नप्त्रीपौत्रीसुतात्मजा॥ २९॥भार्यास्तुभ्रातृवर्गस्ययातरःस्युःपरस्परं॥ प्रजावतीभ्रातृजायामातुलानीतुमातुली॥३०॥ पतिपत्न्योःप्रसूःश्वश्रूःश्वशुरस्तुपितातयोः॥ पितुर्भ्रातापितृव्यःस्यान्मातुर्भ्रातातुमातुलः॥ ३१ ॥ श्यालाःस्युर्भ्रातरःपत्न्याःस्वामिनोदेवृदेवरौ॥ स्वस्रीयोभागिनेयःस्याज्जामाताद्रुहितुःपतिः॥३२॥**

पितृव्यः । एकं । मातुःभ्रातामातुलइत्युच्यते । एकं ॥ ३ १ ॥ पत्न्याः भ्रातरःश्यालाइत्येकं । श्यालाशब्दस्तालव्यादिर्दंत्यादिर्वा "उच्छिष्टमधुपर्कवाचीश्यालशब्दः । श्यांलातीतिश्यालः ।" स्वामिनःपत्युर्भ्रातरिकनिष्ठेदेवा । देवरः । देवृशब्दस्यदेवादेवरौइत्यादि । "देवृदेवरदेवानइतिशब्दार्णवादन्यत्रनांतोपिदेवेति ।" स्वस्रीयः । "घेक्तेस्वस्रियः । ढकि । स्वस्रेयः ।" भागिनेयः । द्वे भगिन्याःपुत्रे । दुहितुःपतिः जामातास्यात् । एकं ॥ ३ २ ॥

पितामहः । पितृपिता । द्वेपितुः पितरि । तस्य पितामहस्यपिताप्रपितामहइत्येकं । एवंमातुःपित्रादौमातामहादि । यथामातुःपिता मातामहः । एकं तत्पिताप्रमातामहः । एकं । सपिंडाः । सनाभयः । द्वे सप्तपुरुषावधिज्ञातिषु । सपिंडतातुपुरुषेसप्तमेविनिवर्ततइतिस्मृतेः । "समानएकःपिंडोदेहो मूलपुरुषोनिर्वाप्योवाऽस्यसपिंडेनवर्ततइतिवासपिंडः । समानोनाभिर्मूलपुरुषोस्यसनाभिः ।" ॥ ३३ ॥ समानोदर्यः । सोदर्यः । सगर्भ्यः । सहजः । च

पितामहःपितृपितातत्पिताप्रपितामहः॥ मातुर्मातामहाद्येवंसपिंडास्तुसनाभयः॥ ३३॥
समानोदर्यसोदर्यसगर्भ्यसहजाःसमाः॥ सगोत्रबांधवज्ञातिबंधुस्वस्वजनाःसमाः॥ ३४॥
ज्ञातेयंबंधुतातेषांक्रमाद्भावसमूहयोः॥ धवःप्रियःपतिर्भर्ताजारस्तूपपतिःसमौ॥ ३५॥

त्वारि एकोदरस्यभ्रातुः । सगोत्रः । बांधवः । ज्ञातिः । बंधुः । स्वः । स्वजनः । षट् सगोत्रस्य । समानमेकंगोत्रमस्यसगोत्रः । अत्रस्वशब्दस्यस्वरूपं स्वः । स्वौ । स्वाः । इत्यादि ॥ ३४ ॥ तेषांभावसमूहयोःक्रमात्ज्ञातेयं बंधुतास्यात् यथाज्ञातीनांभावोज्ञातेयं । एकं । बंधूनांसमूहोबंधुता । एकं । धव : । प्रियः । पतिः । भर्ता । चत्वारिपत्युः । जारः उपपतिः । द्वे । मुख्यादन्यस्यभर्तुः । "उपमितःपत्याउपसृष्टःपतिरनेनवा उपपतिः ।" ॥ ३५ ॥



अमृतेभर्तरि जाराज्जातः कुंडइत्युच्यते । एकं । "कुंडयतेकुलमनेनकुंडः । कुडिदाहे । स्त्रियांतुकुंडी ।" मृतेभर्तरिजाराज्जातो गोलक इत्येकं । भ्रात्रीयः । "भ्रातृव्यः ।" भ्रातृजः । द्वेभ्रातृपुत्रस्य । भ्रातृभगिन्योभ्रातराविति स्यातां । एकं । उभाविति सहोक्तौसत्यामितिसूचनार्थं । भ्राताचस्वसाचभ्रातरौ । भ्रातृपुत्रौस्वसृदुहितृभ्यामित्येकशेषः ॥ ३६ ॥ मातापितरौ । पितरौ । मातरपितरौ । प्रसूजनयितारौ । चत्वारि द्विवचनांतानिमात्रासहोक्तेपितरि । माताचपिताचपितरौ । पितामात्रेत्येकशेषः । मातरपितरावित्यत्र ऋकारयोररङ्भावोनिपात्यते । नमातरपितराभ्यामितिप्रयोगइतिन्यासः

अमृतेजारजःकुंडोमृतेभर्तरिगोलकः॥ भ्रात्रीयोभ्रातृजोभ्रातृभगिन्यौभ्रातरावुभौ॥ ३६॥ मातापितरौपितरौ
मातरपितरौप्रसूजनयितारौ॥ श्वश्रूश्वशुरौश्वशुरौपुत्रौपुत्रश्वदुहिताच॥ ३७॥ दंपतीजंपतीजायापतीभार्याप
तीचतौ॥ गर्भाशयोजरायुःस्यादुल्बंचकललोस्त्रियां॥ ३८॥ श्वश्रूश्वशुरौ । श्वशुरौ । द्वे सहोक्तयोः श्वश्रूश्वशुरयोः । पुत्रश्वदुहिताच एकशेषपुत्रौस्यातामित्यर्थः । एकं ॥ ३७ ॥ दंपती । जंपती । जायापती । भार्यापती । चत्वारिदंपत्योः । तावित्यनेनैतेशब्दाद्विवचनांताःपुंसीति सूचितं । "शाल्मलीमैथलीमैत्रीदंपतीजंपतीसचेतिवाचस्पतौस्त्रीत्वमप्युक्तं ।" गर्भाशयः । जरायुः । उल्बं । त्रीणियेनवेष्टितोगर्भः कुक्षौतिष्ठति । तस्यचर्मणः । गर्भआशेतेऽत्रगर्भाशयः । जरायुरुदंतः । कललइत्येकं शुक्रशोणितसन्निपातस्य प्रसिद्धत्वादस्यपर्यायोनोक्तः किंतुअस्त्रीत्वमात्रंविधीयते । उल्बपर्यायः कललइत्येके । यदाहुः । तदुल्बंकललंचतदिति ॥ ३८ ॥

सूतिमासः । वैजननः । द्वे प्रसवमासस्य । यत्रनवमेवादशमेमासिप्रसूयतेतस्येत्यर्थः । " विजायतेऽस्मिन्विजननः ।" विजनन एववैजननः । गर्भः । भ्रूणः । द्वे कुक्षिस्थस्यप्राणिनः । तृतीयाप्रकृतिः । षंढः । क्लीबः । पंडः । नपुंसकः । पंचनपुंसकस्य । तृतीयाप्रकृतिरितिषडक्षरंनाम संज्ञापूरण्योश्चेतिनिषेधान्नपुंवद्भावः । तृतीयप्रकृतिरित्यपि नञ्घटितमितिन्यायेनउक्तनिषेधानित्यत्वात्पुंवद्भावः । षंढःस्यात्पुंसिगोपतौ । आकृष्टांडेवर्षवरेतृतीयप्रकृतावपीतिकोशांतरात् ।" तत्रप्रथमाप्रकृतिःस्त्री । द्वितीयापुमान् । तृतीयाक्लीबइति । षंढोमूर्द्धन्यादिस्तालव्यादिर्वा ॥ ३९ ॥ शिशुत्वं । शैशवं ।

सूतिमासोवैजननोगर्भोभ्रूणइमौसमौ ॥ तृतीयाप्रकृतिःषंढःक्लीबःपंडोनपुंसके ॥ ३९ ॥ शिशुत्वंशैशवंबाल्यंतारुण्यंयौवनंसमे ॥ स्यात्स्थाविरंतुवृद्धत्वंवृद्धसंघेपिवार्धकं ॥ ४० ॥ पलितंजरसाशौक्ल्यंकेशादौविस्रसाजरा ॥ स्यादुत्तानशयाडिंभास्तनपाचस्तनंधयी ॥ ४१ ॥

बाल्यं । त्रयंबालत्वे । तारुण्यं । यौवनं द्वे । स्थाविरं । वृद्धत्वं । वार्धकं । " वार्धक्यमित्यपि । वार्द्धक्यंवार्द्धकेवृद्धसंघातेवृद्धकर्मणीतिविश्वः ।" त्रीणिवृद्धत्वे । तत्रवार्द्धकमित्येकं वृद्धसंघेपिवृद्धानांसमूहेपि ॥ ४० ॥ केशादौजरसायत्शौक्ल्यं धवलिमातत्पलितमुच्यते । आदिनालोम्नांग्रहणं । विस्रसा । जरा । द्वेजरायाः । विस्रस्यतेऽनयाविस्रसा । जीर्यत्यंगमनयाजरा । उत्तानशया । डिंभा । स्तनपा । स्तनंधयी । चत्वारिस्तनंधयस्य । त्रिषुवक्ष्यंते । स्त्रीत्वेननिर्देशः स्त्रीत्वेरूपभेदप्रदर्शनार्थः । डिंभशब्दः सिंहादिवर्गेउक्तोपिस्त्रियांटाबंतत्वप्रदर्शनायपुनरिहोक्तः ॥ ४१ ॥



बालः । माणवकः । द्वे बालस्य । आषोडशाद्बालः । वयस्थः । वयसितिष्ठतीतिवयस्थइत्यपि । वयःपक्षिणिबाल्यादौवयोयौवनमात्रकइतिविश्वः । तरुणः । युवा । त्रयंयूनः । प्रवयाः । स्थविरः । वृद्धः । जीनः । जीर्णः । जरन् । षट्कंवृद्धस्य । प्रवयसौ । जरंतौ ॥ ४२ ॥ वर्षीयान् । दशमी । ज्यायान् । त्रीण्यतिवृद्धस्य । अतिशयेनवृद्धोवर्षीयान् । वर्षीयांसौ । " दशमोवस्थाविशेषोऽस्यास्तीतिदशमी । वयसिपूरणादिनिः ।" दशमिनौ । ज्यायांसौ । पूर्वजः । अग्रियः । " अग्रीयः " अग्रजः । त्रीणिज्येष्ठभ्रातुः । " पूर्वस्मिन्कालेजातः पूर्वजः ॥" जघन्यजः । कनिष्ठः । " कनीयानित्यपि " यवीयान् । " यविष्ठः । अतिशायनइतीष्ठन् ।" अवरजः । अनुजः । पंचकं कनिष्ठभ्रातुः । " जघन्येवरकालेजातः जघन्यजः । अवरस्मिन्कालेजातःअवरजः ।" ॥ ४३ ॥ अमांसः । दुर्बलः । छातः । त्रीणिअबलस्य । छातश्चवर्गादिः । छोछेदने । शातइतिपाठः । बलवान् । मांसलः । अंसलः । त्रीणिबलवतः । "अंसोबलमस्यास्तीत्यंसलः ।" तुंदिलः । "तुंडिलः । तुंदिकः तुंदितः ।" तुंदिभः । "तुंडिभः ।" तुंदी । "तुंडी ।" बृहत्कुक्षिः । पिचंडिलः । "पिचिंडिलः ।" पंचबृहदुदरस्य । तुंदमस्यास्तीति तुंदिलः । तुंडिभौ ॥ ४४ ॥

बालस्तुस्यान्माणवकोवयस्थस्तरुणोयुवा ॥ प्रवयाःस्थविरोवृद्धोजीनोजीर्णोजरन्नपि ॥ ४२ ॥ वर्षीयान्दशमीज्यायान्पूर्वजस्त्वग्रियोऽग्रजः ॥ जघन्यजेस्युःकनिष्ठयवीयोवरजानुजाः ॥ ४३ ॥ अमांसोदुर्बलश्छातोबलवान्मांसलोंऽसलः ॥ तुंदिलस्तुंदिभस्तुंदीबृहत्कुक्षिःपिचंडिलः ॥ ४४ ॥

अवटीटः। अवनाटः। अवभ्रटः। नतनासिकः। चत्वारिचिपिटनासिकस्य। केशवः। केशिकः। "केशवान्"। केशी। त्रयंप्रशस्तकेशस्य। प्रशस्ताः केशाःसंत्यस्य केशवः। बलिनः। बलिभः द्वे जरयाश्लथचर्मणः। बलिस्त्वक्संकोचोस्तियस्यसः बलिनः ॥ ४५ ॥ विकलांगः। अपोगंडः। द्वे निसर्गतोन्यूनावयवस्य। अपकृष्टंगच्छतीत्यपोगंडः। पृषोदरादिः। "पौगंड एकदेशोऽस्य पोगंडः पौगंडश्चेत्यपि। पोगंडोविकलांग

अवटीटोऽवनाटश्चाऽवभ्रटोनतनासिके॥ केशवःकेशिकःकेशीबलिनोबलिभःसमौ॥ ४५॥
विकलांगस्त्वपोगंडःखर्वोह्रस्वश्चवामनः॥ खरणाःस्यात्खरणसोविग्रस्तुगतनासिकः॥ ४६॥

कइतिरत्नकोशः। पौगंडोविकलांगःस्यादितिहलायुधश्च।" खर्वः। ह्रस्वः। वामनः। त्रयंह्रस्वस्य। "खुजाइतिख्यातस्य।" खरणाः। खरणसः। द्वे तीक्ष्णनासिकस्य। "सरळनाकीलइतिख्यातस्य।" खरणाःसांतः। विग्रः। "विख्रः। विख्रुः। विख्यः। विग्रोविख्रुर्विनासिकइतिरभसः।" गतनासिकः। द्वेगतनासिकस्य।"नकटाइतिख्यातस्य।" ॥ ४६ ॥



खुरणाः। खुरणसः। द्वे विकटनासिकस्य। खुरःशफं तद्वन्नासिकस्य। खुरणसौ। प्रज्ञुः। "प्रज्ञः।" प्रगतजानुकः। द्वे यस्यजान्वोर्महदंतरालंवर्ततेतस्य। "फेंगडाइतिख्यातस्य।" ऊर्ध्वज्ञुः। "ऊर्ध्वज्ञः" ऊर्ध्वजानुः। द्वेतिष्ठतोयस्यजानुनीऊर्ध्वेभवतस्तस्य। संज्ञुः। "संज्ञः" संहतजानुकः। द्वे संलग्नजानुकस्य। "प्रज्ञुःप्रगतजानुःस्यात्प्रज्ञोप्यत्रैवदृश्यते। संज्ञुःसंहतजानौचभवेत्संज्ञोपितत्रहि। ऊर्ध्वज्ञुरूर्ध्वजानुःस्यादूर्ध्वज्ञोप्यूर्ध्वजानुकइतिसाहसांकः"॥ ४७ ॥ एडः। बधिरः। द्वे श्रवणेंद्रियहीनस्य। "बहिराइतिख्यातस्य।" कुब्जः। "न्युब्जः। कुब्जोवृक्षप्रभेदेनान्युब्जःस्याद्वाच्य

खुरणाःस्यात्खुरणसःप्रज्ञुःप्रगतजानुकः॥ ऊर्ध्वज्ञुरूर्ध्वजानुःस्यात्संज्ञुःसंहतजानुकः॥ ४७॥
स्यादेडेबधिरःकुब्जेगडुलःकुकरेकुणिः॥ पृश्निरल्पतनौश्रोणःपंगौमुंडस्तुमुंडिते ॥ ४८॥

लिंगकइतिमेदिनी।" गडुलः "गडुरः। गडुःपृष्ठगडेकुब्जे इतिमेदिन्यां।" द्वेकुब्जस्य। "कुबडाइतिख्यातस्य।" कुकरः। कुणिः। "कूणिः। निसर्गतःकूणिपंगुपौगंडाइतिनाममाला।" द्वे रोगादिनादूषितकरस्य। पृश्निः। "पृष्णिः" अल्पतनुः। द्वे अल्पातनुर्यस्य तस्यअमानुषप्रायस्य। श्रोणः। पंगुः। द्वे जंघाविकलस्य। मुंडः। मुंडितः। द्वे कृतवपनस्य ॥ ४८ ॥

बलिरः । केकरः । द्वे नेत्रवियुक्तस्य । " काणा, कैरा, तिरवाइतिख्यातस्य ।" केमूर्ध्निकर्तुंशीलमस्येतिकेकरः । खोडः । "खोरः । खोलः । अथ खंजकेखोडखोराविति रभसः ।" खंजः । द्वे गतिविकलस्य । " लंगडाइतिख्यातस्य । त्रिष्विति । जरावराः । जराशब्दादवराः अर्वाक्पठिताः । उत्तानशयाद्याः खंजांतास्त्रिषुवाच्यलिंगाइत्यर्थः । जडुलः । " जठुलः ।" कालकः । पिप्लुः । त्रयंकृष्णवर्णस्य देहगतचिन्हविशेषस्य । " लासेंइति

बलिरःकेकरेखोडेखंजस्त्रिषुजरावराः ॥ जडुलःकालकःपिप्लुस्तिलकस्तिलकालकः ॥ ४९ ॥
अनामयंस्यादारोग्यंचिकित्सारुक्प्रतिक्रिया ॥ भेषजौषधभैषज्यान्यगदोजायुरित्यपि ॥ ५० ॥

ख्यातस्य ।" तिलकः । तिलकालकः । द्वे आकृतितो वर्णतश्चकृष्णतिलतुल्यस्य देहगतचिन्हस्य । तिलइवकालकः ॥ ४९ ॥ अनामयं । आरोग्यं । द्वे रोगाभावस्य । " आमयस्याभावः अनामयं ।" चिकित्सा । रुक्प्रतिक्रिया । द्वे रोगप्रतीकारस्य । "रुजःप्रति प्रतिक्रियानिरसनंरुक्प्रतिक्रिया ।" भेषजं । औषधं । भैषज्यं । "भैषजं । भेषंरोगंजयतिभेषजं ।" अगदः । जायुः । पंचौषधस्य । अगदसाहचर्याज्जायुरुदंतः पुंसि ॥५०॥



रुक् । रुजा । उपतापः । रोगः । व्याधिः । गदः । आमयः । सप्तरोगमात्रस्य । तत्ररुक्जकारांता । रुजाटाबंता । उभेस्त्रियौ । क्षयः । शोषः । यक्ष्मा । त्रीणिक्षयरोगस्य । प्रतिश्यायः । पीनसः । द्वे पीनसरोगस्य । पडसेंइतिख्यातस्य । अयंमुहुर्नासाजलस्रावी । " आपीनसःप्रतिश्यास्यादितिरभसात् । प्रतिश्येत्यपिनाम ।" ॥५१॥ क्षुत् । क्षुतं । क्षवः । त्रीणिक्षुतः । शिंकेतिख्यातायाः । कासः । क्षवथुः । द्वे कासरोगस्य । "खोकलाइतिख्यातस्य ।" शोफः । श्वयथुः । शोथः । त्रीणिशोथस्य । "सूजइतिख्यातस्य" पादस्फोटः । विपादिका । द्वे पादस्फोटस्य । "खोंटाफुटण्याचारोगइतिख्यातस्य " ॥५२॥

स्त्रीरुग्रुजाचोपतापरोगव्याधिगदामयाः ॥ क्षयःशोषश्चयक्ष्माचप्रतिश्यायस्तुपीनसः ॥ ५१ ॥ स्त्रीक्षुत्क्षुतंक्षवः पुंसिकासस्तुक्षवथुःपुमान् ॥ शोफस्तुश्वयथुःशोथःपादस्फोटोविपादिका ॥ ५२ ॥ किलाससिध्मेकच्छ्वांतुपाम पामाविचर्चिका ॥ कंडूःखर्जूश्चकंडूयाविस्फोटःपिटकःस्त्रियां ॥५३॥

किलासं । सिध्मं । द्वे सिध्मस्य । शिबें "श्वेतकुष्ठ" इतिख्यातस्य । कच्छूः । पामा । पामा । विचर्चिका । चतुष्कंस्त्रीलिंगं । खर्जूविशेषस्य । "ओलीखरूज" इतिख्यातस्य । अत्रपामेत्येकंनांतं । पामानौ । अपरंटाबंतं । पामे । कंडूः । "कंडुः । खर्जूःखर्जूरीकीटकंडुष्विितिहैमः ।" खर्जूः । कंडूया । त्रयंस्त्रीलिंगं । खर्ज्वाः । "सुकीखरूजइतिख्यातायाः ।" विस्फोटः । पिटकः । "विस्फोटाविटिकास्त्रियामित्यमरमालायां वकारादिरपिविटिकेति ।" द्वे फोडइतिख्यातस्य । स्त्रियांतुपिटका । क्षिपकावत् ॥५३॥

व्रणः । ईर्मं । अरुः । त्रीणिव्रणस्य । ईर्मं । अरुषी । योव्रणःसदागलतितन्नाडीव्रणइत्येकं । पुमानितिपुंस्त्वावधारणार्थंनिर्देशः । कोठः । मंडलकं । कुष्ठं । चित्रं । चत्वारिकुष्ठस्य । कोठाइतिद्वयंमंडलाकृतिकुष्ठस्य "गजकर्णइतिप्रसिद्धस्य ।" कुष्ठादिद्वयंश्वेतकुष्ठस्येत्येके । दुर्नामकं । अर्शः । द्वे अर्शोरोगस्य । " मूळव्याध, अर्श, ।" इतिख्यातस्य । अर्शमितिक्लीबमप्यन्यत्र ।" ॥ ५४॥ आनाहः । निबंधः । द्वेमलमूत्रनिरोधस्य । " मल

व्रणोऽस्त्रियामीर्ममरुःक्लीबेनाडीव्रणःपुमान्॥ कोठोमंडलकंकुष्ठश्वित्रेदुर्नामकार्शसी॥ ५४॥
आनाहस्तुनिबंधःस्याद्ग्रहणीरुक्प्रवाहिका॥ प्रच्छर्दिकावमिश्चस्त्रीपुमांस्तुवमथुःसमाः॥ ५५॥

बद्धरोगइतिख्यातस्य ।" ग्रहणीरुक् । प्रवाहिका । द्वे संग्रहणीरोगस्य । प्रकर्षेणवहतिबहुस्रवतिगुदमस्यांसाप्रवाहिका । मलप्रवहणंप्रवाहिकेति स्वामी । " प्रवाहिकारुक्रोगःग्रहणीस्यादित्यन्वयोवा । ग्रहणिरितीकारह्स्वोपि ।" प्रच्छर्दिका । वमिः " वमी ।" वमइतिपुंल्लिंगोपि " वमथुः । त्रीणिवमनरोगस्य । तत्राद्यंद्वयंस्त्रियां । वमथुः पुंसीत्यर्थः । समाःसमानार्थाः ॥ ५५ ॥



अथव्याधिभेदावक्ष्यंते । विद्रधिरुदरादौगंडभेदः । विद्रंदधातीतिविद्रधिःस्त्रियां । "आदिशब्देनकपालकर्णप्रमेहानांपिटकाज्ञेयाः ।" ज्वरःप्रसिद्धः मेहतिमूत्रयतेऽनेनमेहः । सचरक्तमेहः शुभ्रमेहइत्यादिभेदेनबहुविधः । भगंदरोगुह्यसमीपेविस्फोटविशेषः । "श्लीपदं । पादवल्मीकं । द्वयंश्लीपदरोगस्य । बारुळइतिख्यातस्य । केशघ्नः । इंद्रलुप्तकः । द्वयंमस्तककेशरोगस्य । चाईइतिप्रसिद्धस्य ।" अश्मरी । मूत्रकृच्छ्रं । द्वे अश्मर्याः । अश्माकारंशुक्रंरातिददातीत्यश्मरीस्यादित्यनेनमूत्रकृच्छ्रमित्यश्मर्याः पर्यायइतिसूचितं मूत्रविघ्नमात्रेमूत्रकृच्छ्रमितिनायमश्मर्याः पर्यायइतिकेचित्।

व्याधिभेदाविद्रधिःस्त्रीज्वरमेहभगंदराः॥ "श्लीपदंपादवल्मीकंकेशघ्नस्त्विंद्रलुप्तकः"
अश्मरीमूत्रकृच्छ्रंस्यात्पूर्वेशुक्रावधेस्त्रिषु॥ ५६ ॥ रोगहार्यगदंकारोभिषग्वैद्योचिकि
त्सके॥ वार्तोनिरामयःकल्यउल्लाघोनिर्गतोगदात्॥ ५७ ॥

इतःपरंशुक्रावधेःवक्ष्यमाणात्शुक्रशब्दात्पूर्वेमूर्छितांतास्त्रिषु । वाच्यलिंगाइत्यर्थः ॥ ५६ ॥ रोगहारी । अगदंकारः । भिषक् । वैद्यः । चिकित्सकः पंचवैद्यस्य । रोगहारिणौ । भिषजौ । वार्तः । निरामयः । कल्यः । त्रीणिरोगरहितस्य । कल्यस्तालव्यांतः । "कल्यंप्रभातेमधुनिसज्जेदत्तेनिरामये कल्याकल्याणवाचिस्यादितिहैमः ।" उल्लाघइत्येकंरोगान्मुक्तस्य । अयमपिपूर्वस्यैवपर्यायइत्येके ॥ ५७ ॥

ग्लानः । ग्लास्नुः । द्वे रोगादिवशात् हर्षरहितस्य । आमयावी । विकृतः । व्याधितः अपटुः । आतुरः । अभ्यमितः । अभ्यांतः । सप्तकं रोगिणः । पामनः । कच्छुरः । द्वे पामायुक्तस्य ॥ ५८ ॥ दद्रुणः । "दद्रूणः । दर्द्रुणः । दर्द्रूणः ।" दद्रुरोगी । द्वे दद्रुयुक्तस्य । दद्रुःखर्जूभेदः । "दादइतिप्रसिद्धा ।" अर्शोरोगेणयुतः अर्शसइत्युच्यते । एकं । वातकी । वातरोगी । द्वे वातरोगयुक्तस्य । सातिसारः । अतिसारकी । द्वे अतिसारयुक्तस्य ॥ ५९ ॥ क्लि

ग्लानग्लास्नू आमयावीविकृतोव्याधितोपटुः ॥ आतुरोभ्यमितोभ्यांतःसमौपामनकच्छुरौ ॥ ५८ ॥
दद्रुणोदद्रुरोगीस्यादर्शोरोगयुतोर्शसः ॥ वातकीवातरोगीस्यात्सातिसारोतिसारकी ॥ ५९ ॥
स्युःक्लिन्नाक्षेचुल्लचिल्लपिल्लाःक्लिन्नेक्षिणचाप्यमी ॥ उन्मत्तउन्मादवतिश्लेष्मलःश्लेष्मणःकफी ॥ ६० ॥

न्नाक्षः । चुल्लः । चिल्लः । पिल्लः । चत्वारिक्लेदयुक्तेअक्षिणीयस्य तस्यपुंसः । "चिपडाइतिख्यातः ।" अमीचुल्लचिल्लपिल्लास्त्रयः क्लिन्नेक्षिणचक्लेदयुक्तेनेत्रेपिवर्तंते । "चिपडेडोळेइतिख्यातेषु" उन्मत्तः । उन्मादवान् । द्वे उन्मादयुक्तस्य । उन्मादोवातपित्तादिकृतश्चित्तविभ्रमः । श्लेष्मलः । श्लेष्मणः । कफी । त्रीणिकफयुक्तस्य ॥ ६० ॥

रुजारोगेण भुग्नोवक्रपृष्ठोधोमुखस्तत्रन्युब्जइत्येकं । वृद्धनाभिः । तुंदिलः । "तुंडिलः" तुंदिभः । "तुंडिभः ।" त्रीणिवातादिनोन्नतनाभेः । किलासी । सिध्मलः । द्वे सिध्मयुक्तस्य । " शिब्याइतिख्यातस्य ।" अंधः । अदृक् । द्वे दृष्टिहीनस्य । " अंधळा इतिख्यातस्य ।" अदृशौ । मूर्छालः । मूर्तः । मूर्छितः । त्रीणिमूर्छायुक्तस्य ॥ ६१ ॥ शुक्रं । तेजः । रेतः । बीजं । वीर्यं । इंद्रियं । षट्रेतसः । मायुः । पित्तं । द्वे पित्तस्य । मायुरुदंतः पुंसि ।

न्युब्जोभुग्नेरुजावृद्धनाभौतुंदिलतुंदिभौ ॥ किलासीसिध्मलोंधोदृक्मूर्छालेमूर्तमूर्छितौ ॥ ६१ ॥
शुक्रंतेजोरेतसीचबीजवीर्येंद्रियाणिच ॥ मायुःपित्तंकफःश्लेष्मास्त्रियांतुत्वगसृग्धरा ॥ ६२ ॥
पिशितंतरसंमांसंपललंक्रव्यमामिषं ॥ उत्तप्तंशुष्कमांसंस्यात्तद्वल्लूरंत्रिलिंगकं ॥ ६३ ॥

कफः । श्लेष्मा । द्वे कफस्य । श्लेष्माणौ । त्वक् । असृक्धरा । " असृक्धारेत्येके ।" द्वे चर्मणः । त्वचौ । "त्वचइत्यदंतः । त्वचेतिटाबंतश्चान्यत्र ।" ॥ ६२ ॥ पिशितं । तरसं । मांसं । पललं । क्रव्यं । आमिषं । षट्कं मांसस्य । उत्तप्तं । शुष्कमांसं । वल्लूरं । "वल्लुरमितिह्रस्वोकारमपि ।" त्रीणिशुष्कमांसस्य । तत्रवल्लूरंत्रिषु । वल्लुरा ॥ ६३ ॥

रुधिरं । असृक् । लोहितं । अस्रं । रक्तं । क्षतजं । शोणितं । सप्त रक्तस्य । असृजी । बुक्का । " बूक्का । अग्रमांसं । द्वे हृदयांतर्गतपद्माकारमांस भेदस्य । " काळीजइतिख्यातस्य ।" बुक्कास्त्री । " बुक्काग्रमांसमितिसमस्तमपि ।" हृदयं । हृत् । द्वे हृदयाख्यनिम्नदेशस्य । बुक्कादिचतुष्कं स मानार्थमित्येके । हृदी । हृंदि । मेदः । वपा । वसा । त्रीणिमांसजन्यस्नेहस्य । " चरबी । मांदेंइतिख्यातस्य ।" मेदसी ॥ ६४ ॥ ग्रीवायाः शि रोग्रीवाशिरा । यापश्चात्स्थिताग्रीवाशिरासामन्येत्युच्यते । एकं । नाडी । धमनिः । शिरा । त्रयंशिरायाः । " नाडीइतिख्यातायाः ।" शिरेति दंत्या

रुधिरेस्तृक्लोहितास्रक्तक्षतजशोणितं ॥ बुक्काग्रमांसंहृदयंहृन्मेदस्तुवपावसा ॥ ६४ ॥
पश्चाद्ग्रीवाशिरामन्यानाडीतुधमनिःशिरा ॥ तिलकंक्लोममस्तिष्कंगोर्दंकिट्टंमलोऽस्त्रियां ॥ ६५ ॥

दिरपि । कृदिकारादक्तिनइतिङीषिधमनीत्यपि । तिलकं । क्लोम । द्वे मांसपिंडविशेषस्य । पुप्फुसइतिख्यातस्य । क्लोममित्यदंतमपि । मस्तिष्कं । " मस्तिस्कं । अथमस्तिस्कोमस्तुलिंगोपीतित्रिकांडशेषः ।" गोर्दं । " गोदः " द्वे मस्तकसंभूतघृताकारस्नेहस्य । " गोद. मेंदू " इतिख्यातस्य । किट्टं । मलः । द्वे कर्णादिगतमलस्य । " वसाशुक्रमसृक्मज्जाकर्णविण्मूत्रविण्नखाः । श्लेष्माश्रुदूषिकास्वेदोद्वादशैतेनृणांमलाः ।" ॥ ६५ ॥



अंत्रं । " आंत्रमित्यपिमनोरमायामुक्तं ।" पुरीतत् । द्वे अंत्रस्य । " आंतडें इतिख्यातस्य ।" पुरीतती । पुरीतंति । "पुरीतदस्त्रियामितिवाचस्पतिको शात्पुंस्यपि ।" गुल्मः । प्लीहा । द्वे वामकुक्षिस्थमांसपिंडविशेषस्य । प्लीहानौ । " प्लीहाशब्दष्टाबंतोपि ।" वस्नसा । स्नायुः । द्वे अंगप्रत्यंगसंधिबंधनरू पायाः स्नायोः । " शिराइतिख्यातायाः ।" कालखंडं । यकृत् । द्वे दक्षिणकुक्षिगतमांसपिंडस्य ॥ ६६ ॥ सृणिका । " सृणीका ।" स्यंदिनी । लाला । त्रीणिलालायाः । " लाळइतिख्यातायाः ।" स्यंदिनीदंत्यादिः । दूषिकेत्येकंनेत्रयोर्मलस्य । " उकीर. पू. इतिख्यातस्य । दूषिकादीर्घमध्यापि । दूषि

अंत्रंपुरीतत्गुल्मस्तुप्लीहापुंस्यथवस्नसा ॥ स्नायुःस्त्रियांकालखंडयकृतीतुसमेइमे ॥ ६६ ॥ सृणिकास्यंदिनीलाला
दूषिकानेत्रयोर्मलं ॥ "नासामलंतुसिंघाणंपिंजूषंकर्णयोर्मलं ॥" मूत्रंप्रस्रावउच्चारावस्करौशमलंशकृत् ॥ ६७ ॥
पुरीषंगूथवर्चस्कमस्त्रीविष्ठाविशौस्त्रियौ ॥ स्यात्कर्परःकपालोस्त्रीकीकसंकुल्यमस्थिच ॥ ६८ ॥

दूषीचेत्यप्यन्यत्र । सिंघाणमित्येकंनासामलस्य । सिंहाणंसिंहानंचेत्यपि । पिंजूषइत्येकंकर्णमलस्य " मूत्रं । प्रस्रावः । द्वे मूत्रस्य । उच्चारः । अ वस्करः । शमलं । शकृत् ॥ ६७ ॥ पुरीषं । गूथं । वर्चस्कं । विष्ठा । विट् । नवविष्ठायाः । "उच्चार्यतेत्यज्यतेइत्युच्चारः । अवकीर्यतेअधःक्षिप्यत इत्यवस्करः ।" गूथंवर्चस्कंपुंसिक्लीबेच । शकृती । " विट्तालव्यमूर्धन्यांत्यः । विशौ । विषौ । गूथं । पुरीषंवर्चस्कमित्यपिपाठः ।" कर्परः । क पालः । द्वे शिरोस्थिखंडस्य । कपालमस्त्रियां । कीकसं । कुल्यं । अस्थि । त्रीणिअस्थिमात्रस्य ॥ ६८ ॥

कंकालइत्येकंशरीरगतास्थिपंजरस्य । "सांगाडा· पिंजराइतिख्यातस्य ।" कशेरुकेत्येकंपृष्ठमध्यगतास्थिदंडस्य । " कणाइतिख्यातस्य " करोटिरित्येकं शिरोगतास्थिसंघस्य । " करोटीतिङीषंतापि । यदाह पुष्पदंतः । नृकरोटीपरिकरइति" पर्शुकेत्येकंपार्श्वगतास्थिनि । "बरगडी इतिख्याते।" ॥६९॥अंगं । प्रतीकः । अवयवः । अपघनः । चतुष्कं देहावयवस्य । कलेवरं । गात्रं । वपुः । संहननं । शरीरं । वर्ष्म । विग्रहः ॥७०॥ कायः । देहः ।

स्याच्छरीरास्थिकंकालःपृष्ठास्थितुकशेरुका॥ शिरोस्थनिकरोटिःस्त्रीपार्श्वास्थनितुपर्शुका॥ ६९ ॥
अंगंप्रतीकोवयवोऽपघनोथकलेवरं॥ गात्रंवपुःसंहननंशरीरंवर्ष्मविग्रहः ॥ ७० ॥ कायोदेहःक्लीब
पुंसोःस्त्रियांमूर्तिस्तनुस्तनूः॥ पादाग्रंप्रपदंपादःपदंघ्रिश्चरणोस्त्रियां॥ ७१ ॥

मूर्तिः॥ तनुः । तनूः । द्वादश देहस्य । वपुषी । वर्ष्मणी । तन्वौ । पादाग्रं । प्रपदं । द्वे पादाग्रस्य । चवडाइतिख्यातस्य । पादः । पत् । अंघ्रिः । चरणः । चत्वारि चरणस्य । दांतःपत् । " पदोंघ्रिरितिपाठे अदंतः पदशब्दः ।" ॥ ७१ ॥



तद्ग्रंथीपादस्य पार्श्वस्थौग्रंथिविशेषौघुटिकेगुल्फाविततिचोच्येते । द्वयं । "पायांचाघोंटाइतिख्यातस्य ।" घुटिकेस्त्रियां द्वित्वाद्विवचनं नतुनित्यं । तयोः गुल्फयोरधःप्रदेशः पार्ष्णिरित्येकं । खोंटइतिख्यातस्य । "पार्ष्णिःस्त्रीपुंसयोःपादमूलेस्याल्ध्वजिनीकटावितितुरंतिदेवः । जंघा । प्रसृता । द्वे जंघायाः । पोटरी इतिप्रसिद्धायाः । जानु । ऊरुपर्व । अष्ठीवत् । त्रयंजानूरुसंधेः । ढोंपर "गुडघाइतिख्यातस्य ।" तत्राष्ठीवदस्त्रियां । जानुनी । ऊरुपर्वणी । अष्ठीवंतौ ॥ ७२ ॥ सक्थि । ऊरुः । द्वे जानूपरिभागस्य । "मांडीइतिख्यातस्य ।" ऊरोरुपरिभागःसक्थीतिकचिद्भेदोदृश्यते । तस्योरोः

तद्ग्रंथीघुटिकेगुल्फौपुमान्पार्ष्णिस्तयोरधः॥ जंघातुप्रसृताजानूरुपर्वाष्ठीवदस्त्रियां॥ ७२ ॥ सक्थिक्लीबे
पुमानूरुस्तत्संधिःपुंसिवंक्षणः॥ गुदंत्वपानंपायुर्नाबस्तिर्नाभेरधोद्वयोः॥७३॥ कटोनाश्रोणिफलकंकटिः
श्रोणिःककुद्मती॥ पश्चान्नितंबःस्त्रीकट्याःक्लीबेतुजघनंपुरः॥ ७४ ॥ संधिः वंक्षणइत्येकं । गुदं । अपानं । पायुः । त्रीणि विष्ठानिर्गमद्वारस्य । पायुरुदंतोनापुमान् । बस्तिरित्येकंस्त्रीपुंसलिंगंनाभेरधोमूत्राशयस्य ॥ ७३ ॥ श्रोणिःकटिस्तस्याःफलकं कटइत्युच्यते । सपुमान् । एकं । कटिः । " कटीतिङीषंतापि ।" श्रोणिः । "श्रोणी ।" ककुद्मती । त्रयंस्त्रीलिंगंकट्याः । "ककुद्वृषांसइवमासपिंडःसोऽतिशयितोस्यां ककुद्मती ।" स्त्रियाः कटिः स्त्रीकटिः । तस्याःपश्चाद्भागोनितंबइत्येकं । "निभृतंतम्यते कामुकैः नितंबः । तमुकांक्षायां ।" जघनमित्येकं स्त्रीकट्याः पुरोभागे । "वांदन ओंटीइतिख्याते ।" ॥ ७४ ॥

नितंबस्थौ पृष्ठवंशादधोभागेविद्यमानौ कूपकौगर्तौकुकुंदरेस्यातां। "अकारादिरपि" एकं। द्वयहीनेक्लीबे। द्वित्वमनित्यं। स्फिचौ। कटिप्रोथौ। द्वे कटिस्थमांसपिंडयोः। "कुलेइतिख्यातयोः। कटिःतस्याः प्रोथौमांसपिंडौ कटिप्रोथौ। स्त्रियांस्फिचौ कटिप्रोथौकटिप्रोथौचपूलका वितिरभसः। कटीप्रोथावितिनामद्वयंवा। प्रोथोश्वघोणाध्वगयोः कट्यामितिहैमः।" वक्ष्यमाणयोर्भगेशिश्नेचउपस्थइत्येकं॥ ७५॥ भगं। योनिः। द्वे स्त्रीणामुपस्थस्य। द्वयोरित्यस्ययोनिनान्वयः। शिश्नः। मेंढ्रः। मेहनं। शेफः। "शेपः" चत्वारिशिश्नस्य। मुष्कः। अंडकोशः।" मूर्धन्यांतोपि" वृषणः। त्रीण्यंडकोशस्य। "आंडकुलीइतिख्यातस्य।" पृष्ठवंशाधरेत्रिभिरस्थिभिर्घटितंस्थानंत्रिकंइत्येकं। "माकडहाड इतिख्यातस्य।" ॥७६॥ पिचंडः। "पिचिंडः।" कुक्षिः। जठरं। उदरं। तुंदं। पंच जठरस्य तत्रपिचंडकुक्षीपुंसि। "जठरंविकल्पेनपुंसि। जठरोनस्त्रियांकुक्षौबद्धकर्कटयोस्त्रिष्वितिमेदिनी।" कुचः। स्तनः। द्वे वक्षोजस्य। चूचुकं। कुचाग्रं। द्वयंस्तनाग्रस्य। चूचुकोनाकुचाननमितिरत्नकोशः। "चूष्यतेपीयतइतिचूचुकं।" क्रोडं। भुजांतरं॥ ७७॥

> कूपकौतुनितंबस्थौद्वयहीनेकुकुंदरे॥ स्त्रियांस्फिचौकटिप्रोथावुपस्थोवक्ष्यमाणयोः॥ ७५॥ भगंयोनिर्द्वयोःशिश्नोमेंढ्रोमेहनशेफसी॥ मुष्कोंडकोशोवृषणःपृष्ठवंशाधरेत्रिकं॥ ७६॥ पिचंडकुक्षीजठरोदरंतुंदंस्तनौकुचौ॥ चूचुकंतुकुचाग्रंस्यान्ननाक्रोडंभुजांतरं॥ ७७॥



उरः। वत्सः। वक्षः। पंचवक्षसि। तत्रक्रोडंननाकिंतुस्त्रीनपुंसकयोः। स्त्रियांतुक्रोडा। तनोः शरीरस्यचरमंपश्चाद्भागः पृष्ठमित्येकं। स्कंधः। भुजशिरः। अंसः। त्रीणिभुजशिरसः। "खांदाइतिख्यातस्य।" तस्यस्कंधस्यसंधी जत्रुशब्दवाच्यौ। एकं। "नपुंसकं।" ॥ ७८॥ बाहुमूलं। कक्षः। द्वे कक्षस्य। तयोरधोभागः। पार्श्वमित्येकं। मध्यमं। अवलग्नं। मध्यः। त्रीणि तनुमध्यस्य। माज. "कमर" इतिख्यातस्य। अस्त्रीतिमध्यमादिशब्दत्रयेप्यन्वेति।" परौद्वौभुजबाहुशब्दौस्त्रीपुंसयोः॥ ७९॥ भुजः। बाहुः। बाहः। बाहोश्वभुजयोः पुमानितिदामोदरः। बाहोबाहुरितिस्मृतइतिदेशीकोशः।" प्रवेष्टः। दोः। चत्वारिभुजस्य। "स्त्रियांतुभुजा। बाहा।" दोषौ। शसादौदोषः। दोष्णेत्यादि। "दोर्दोषाचभुजोबाहुःपाणिर्हस्तःकरस्तथेतिधनंजयात्। दोषेतिटाबंतोपिवर्तते।" कफोणिः। "कफणिः। कपोणिः। कफणिर्द्वयोरितिशब्दार्णवः।" कूर्परः। "कर्परः" द्वे कोंपरइतिख्यातस्य। अस्यकूर्परस्योपरिभागेप्रगंडइत्येकं। तस्यकूर्परस्याधोभागेप्रकोष्ठइत्येकं॥ ८०॥

> उरोवत्संचवक्षश्चपृष्ठंतुचरमंतनोः॥ स्कंधोभुजशिरोंसोऽस्त्रीसंधीतस्यैवजत्रुणी॥ ७८॥ बाहुमूलेउभेकक्षौपार्श्वमस्त्रीतयोरधः॥ मध्यमंचावलग्नंचमध्योऽस्त्रीद्वौपरौद्वयोः॥ ७९॥ भुजबाहूप्रवेष्टोदोःस्यात्कफोणिस्तुकूर्परः॥ अस्योपरिप्रगंडःस्यात्प्रकोष्ठस्तस्यचाप्यधः॥ ८०॥

पाणिप्रकोष्ठसंधिर्मणिबंधः । तमारभ्यकनिष्ठापर्यंतंकरस्यमांसलोबहिर्भागः करभइत्युच्यते । एकं । पंचशाखः । शयः । । "शमः । पाणिः शमःशयोहस्तइत्यमरमाला ।" पाणिः । त्रीणि करस्य । तर्जनी । प्रदेशिनी । "प्रदेशनीत्यपि ।" द्वे अंगुष्ठसमीपांगुल्याः ॥ ८१ ॥ अंगुली । करशाखा । द्वे अंगुलीमात्रस्य । ताअंगुल्यः । क्रमेण अंगुष्ठः । प्रदेशिनी । मध्यमा । अनामिका । कनिष्ठिका । इतिसंज्ञाभिरुच्यंते । एकैकं । त

मणिबंधादाकनिष्ठंकरस्यकरभोबहिः ॥ पंचशाखःशयःपाणिस्तर्जनीस्यात्प्रदेशिनी ॥ ८१ ॥
अंगुल्यःकरशाखाःस्युःपुंस्यंगुष्ठःप्रदेशिनी ॥ मध्यमानामिकाचापिकनिष्ठाचेतिताःक्रमात् ॥ ८२ ॥
पुनर्भवःकररुहोनखोस्त्रीनखरोस्त्रियां ॥ प्रादेशतालगोकर्णास्तर्जन्यादियुतेतते ॥ ८३ ॥

त्रांगुष्ठः पुंसि । प्रागुक्तापिप्रदेशिनीतत्स्वरूपदर्शनार्थमिहपुनरुक्तेतिनदोषः ॥ ८२ ॥ पुनर्भवः । "पुनर्नवः" । कररुहः । नखः । नखरः । चत्वारिन खस्य । "नखरःपुंसिक्लीबेच । नखरंत्रिष्विति अमरमाला ।" तर्जन्यादिभिस्तिसृभिरंगुलिभिर्युतेंगुष्ठेविस्तृतेप्रादेशादयःक्रमात्स्युः । "प्रादेशइतिग्व्हस्वादिरपि ।" एकैकं । तथाहितर्जनीसहितांगुष्ठेविस्तृतेप्रादेशः । एवंमध्यमासहितांगुष्ठेविस्तारे तालः । अनामिकायुतेंऽगुष्ठे गोकर्णः ॥ ८३ ॥



कनिष्ठासहितेंगुष्ठेविस्तृतेवितस्तिः । द्वादशांगुलः । द्वे साहचर्याद्वितस्तिःपुंसि । स्त्रियामितिसुभूतिः । चपेटः । 'चर्पटः । चर्पटःस्फारविपुलेचपेटे चर्पटेपिचेतिमेदिनीविश्वप्रकाशौ ।" प्रतलः प्रहस्तः । त्रीणि विस्तृतांगुलिकेपाणौ ॥ ८४ ॥ वामदक्षिणौद्वौप्रतलौ । संहतौचेत्संहतलःस्यात् । "सिंहतलइत्यपिपाठः । संहतलःप्रतलश्चेतिनामद्वयंवा । तत्रसंहतलप्रतलावित्यविसर्गपाठः । प्रततेप्रश्लिष्टेवातलेऽत्रप्रतलः ।" निकुब्जोनिःशेषेणकुब्जीकृतः पाणिःप्रसृतिःस्यात् । "प्रसृतइतिपाठः तत्रप्रकृष्टंसृतमस्येतिविग्रहः । प्रसृतःसुप्रसोरस्याद्विनीतेवेगितेत्रिषु । अर्द्धांजलौतुपुंल्लिंगोजंघायांप्रसृ

अंगुष्ठेसकनिष्ठेस्याद्वितस्तिर्द्वादशांगुलः ॥ पाणौचपेटप्रतलप्रहस्ताविस्तृतांगुलौ ॥ ८४ ॥ द्वौसंहतौसंहतलःप्रतलौ वामदक्षिणौ ॥ पाणिर्निकुब्जःप्रसृतिस्तौयुतावंजलिःपुमान् ॥ ८५ ॥ प्रकोष्ठेविस्तृतकरेहस्तोमुष्ट्यातुबद्धया ॥ सरत्निःस्यादरत्निस्तुनिष्कनिष्ठेनमुष्टिना ॥ ८६ ॥

तामतेतिमेदिनी ।" एकं । द्वौद्वौप्रसृतीसंहतौचेदंजलिरित्येकंपुंसि ॥ ८५ ॥ विस्तृतःकरोयत्रतादृशेप्रकोष्ठे कूर्पराधोभागेहस्तइत्येकं । अयंचतुर्विंशत्यंगुलमितोज्ञेयः । सतुबद्धयामुष्ट्योपलक्षितः रत्निरित्येकं । "मुंढाहातइतिख्यातस्य । सरत्निरित्यपिस्त्रियामपि ।" निष्कनिष्ठेनविस्तृतकनिष्ठेनमुष्टिनोपलक्षितोहस्तः अरत्निरित्येकंस्त्रियां । "अरत्निःपुमानपि । नारत्निः कफणौ हस्तेप्रकोष्ठेविततांगुलाविति रुद्रविश्वप्रकाशौ ।" मुष्ट्यामुष्टिनेतिनिर्देशेनमुष्टिर्द्वयोरितिज्ञापितं ॥ ८६ ॥

तिर्यक्तयोर्विस्तृतयोः करसहितयोर्बाह्वोरंतरंव्यामः। ऊर्ध्वविस्तृतदोषौभुजौपाणीचयेनतस्यनुःपुंसोयन्मानंतत्रपौरुषमित्येकंत्रिषु। स्त्रियांतुपौरुषी। ॥ ८७ ॥ कंठः। गलः। द्वे "ग्रीवाग्रभागस्य। गोंकनळी. गोंकटो. नरडीइतिख्यातस्य।" ग्रीवा। शिरोधिः। कंधरा। त्रीणिमानइतिख्यातस्य।" शिरोधिरपिस्त्री। साग्रीवातिसृभीरेखाभिर्विशिष्टाकंबुग्रीवास्यादित्येकं। अवटुः। घाटा। कृकाटिका। त्रीणिग्रीवाशिरःसंधेः पश्चाद्भागस्य। "ग्री

व्यामोबाह्वोःसकरयोस्तनयोस्तिर्यगंतरं॥ ऊर्ध्वविस्तृतदोष्पाणिनृमानेपौरुषंत्रिषु॥ ८७॥
कंठोगलोऽथग्रीवायांशिरोधिःकंधरेत्यपि॥ कंबुग्रीवात्रिरेखासाऽवटुर्घाटाकृकाटिका॥ ८८॥
वक्त्रास्येवदनंतुंडमाननंलपनंमुखं॥ क्लीबेघ्राणंगंधवहाघोणानासाचनासिका॥ ८९॥

वायामुन्नतभागस्य घांटीइतिख्यातस्येतिकेचित्।" तत्राऽवटुःपुंसि ॥ ८८॥ वक्त्रं। आस्यं। वदनं। तुंडं। आननं। लपनं। मुखं। सप्त मुखस्य। "आस्यंतेवर्णायेनअस्यतेग्रासोवाऽस्मिन्नतदास्यं। ण्यत्। मुखंमुखांतरालंचद्वयमास्यमितीरितमितिशाश्वतः।" घ्राणं। गंधवहा। घोणा। नासा "न सा। नस्या। घ्राणंगंधवहानासानसानस्याचनासिकेतिसाहसांकः।" नासिका। पंच नासिकायाः॥ ८९॥




ओष्ठः। अधरः। रदनच्छदः। दशनवासः। चत्वारिओष्ठस्य। ओष्ठाभ्यांसहितावधरौ। केचिदुपरिवर्त्योष्ठः अधोवर्त्यधरइतिमन्वते। तदयुक्तं। अध रोष्ठः बिंबोष्ठीत्यादिप्रयोगदर्शनात्। चिबुकमित्येकंअधस्तात् अधराधोभागे। गंडः। कपोलः। द्वे कपोलस्य। "गालइतिख्यातस्य।" तत्रापिनेत्रक पोलमध्यदेशोगंडइतिग्रंथांतरं। ताभ्यांकपोलाभ्यांपराचिबुकस्याधोहनुरित्येकं। हनुःपुंस्यपि। प्रायेणस्त्रियां॥ ९०॥ रदनः। दशनः। दंतः। रदः। चत्वारिदंतस्य। तालु। काकुदं। द्वे तालुनः। रसज्ञा। रसना। "तालव्याअपिदंत्याश्चेत्यादौजिव्हायां रसनातथेत्युक्तेःरसनाशब्दोदंत्यतालव्यमध्यः।

ओष्ठाधरौतुरदनच्छदौदशनवाससी॥ अधस्ताच्चिबुकंगंडौकपोलौतत्पराहनुः॥ ९०॥
रदनादशनादंतारदास्तालुतुकाकुदं॥ रसज्ञारसनाजिव्हाप्रांतावोष्ठस्यसृक्किणी॥ ९१॥

रसनमितिक्लीबमपि। रसनंस्वेदनेध्वनौ। जिव्हायांतुनपुंसिस्यादितिमेदिनी।" जिव्हा। त्रीणिजिव्हायाः। प्रांतावितिओष्ठद्वयस्यवामदक्षिणौप्रांतौ सृक्किणीस्यातां। ईबंतस्यस्त्रियामेकवचनं। नांतस्यक्लीबे वाद्विवचनमेतत्। सृक्किइतिइदंतस्यक्लीबेद्विवचनंवा। सृक्किण्यांसृक्किसृक्कचेतिशब्दभे दात्। "सृक्केतिनांतस्यक्लीबेसृक्किणीतिपाठः। कवयुक्तमितिमतेतु। यथासृक्किणीस्त्रियां। सृक्किनांतमिदंतंच। सृक्केतिनांतं। सृक्कसृक्कमदंतंचेत्य न्यत्र" एकं॥ ९१॥

ललाटं । अलिकं । गोधिः । त्रीणिभालस्य ।"अलिकंव्हस्वदीर्घमध्यमितिराजदेवः ।" गोधिःपुंसि । दृग्भ्यामूर्ध्वभागौभ्रुवौ । एकं । भ्रूः । नासोप रिभ्रुवोर्मध्येकूर्चइत्येकं । अक्ष्णः । कनीनिकामध्यगतकृष्णमंडलंतारकेत्युच्यते । एकं ॥ ९२ ॥ लोचनं । नयनं । नेत्रं । ईक्षणं । चक्षुः । अक्षि । दृक् । दृष्टिः । अष्टौनेत्रस्य । चक्षुषी । दृशौ । अस्रु । नेत्रांबु । रोदनं । अस्रं । अश्रुपंचनेत्रोदकस्य । अस्रुदंतमध्यं । अंत्यंतालव्यमध्यं । अस्रमदंतंदं

ललाटमलिकंगोधिरूर्ध्वेदृग्भ्यांभ्रुवौस्त्रियौ॥ कूर्चमस्त्रीभ्रुवोर्मध्यंतारकाक्ष्णःकनीनिका॥ ९२॥
लोचनंनयनंनेत्रमीक्षणंचक्षुरक्षिणी॥ दृग्दृष्टीचास्रुनेत्रांबुरोदनंचास्रमश्रुच॥ ९३॥
अपांगौनेत्रयोरंतौकटाक्षोपांगदर्शने॥ कर्णशब्दग्रहौश्रोत्रंश्रुतिःस्त्रीश्रवणंश्रवः॥ ९४॥
उत्तमांगंशिरःशीर्षंमूर्धानामस्तकोस्त्रियां॥ ॥चिकुरःकुंतलोवालःकचःकेशःशिरोरुहः॥ ९५॥

त्यमध्यं ।"तालव्यमध्यमपि ।" ॥ ९३॥ नेत्रयोरंतौअपांगौ । एकं । अपांगेनदर्शनेचेष्टायांकटाक्षइत्युच्यते । कर्णः । शब्दग्रहः । श्रोत्रं । श्रुतिः । श्र वणं । श्रवः । षट् कर्णस्य । स्त्रीतिविशेषविधानात् संकरोनिर्दोषाय । श्रवसी ॥ ९४॥ उत्तमांगं । शिरः । शीर्षं । मूर्धा । मस्तकः । पंच शिरसः । नापुमा न् । चिकुरः । "चिकूरः । कुंतलामूर्द्धजास्त्वस्त्राश्चिकूराश्चिकुराःकचाइतिदुर्गः ।" कुंतलः । वालः । कचः । केशः । शिरोरुहः षट् केशस्य ॥ ९५॥

कैशिकं । कैश्यं । द्वेतद्वृंदे । केशानांसमूहे । अलकाः । चूर्णकुंतलाः । द्वे कुटिलकेशानां । ते अलकाः ललाटेलंबमानाः भ्रमरकाःस्युः । काकप क्षः । शिखंडकः । "शिखंडिकः । शिखांडकः । शिखांडकशिखंडिकावितिवाचस्पतिसुभूती । शिखंडोबर्हचूडयोरितिमेदिन्यां " द्वे कुमारचूडा याः ॥ ९६ ॥ कबरी । केशवेशः । द्वे केशबंधरचनायाः । कबरीस्त्री । संयताः मौक्तिकदामादिबद्धाः कचाः केशसमूहोधम्मिल्लइत्येकं । "बुधडाइ

तद्वृंदेकैशिकंकैश्यमलकाश्चूर्णकुंतलाः॥ तेललाटेभ्रमरकाःकाकपक्षःशिखंडकः॥ ९६॥
कबरीकेशवेशोथधम्मिल्लःसंयताःकचाः॥ शिखाचूडाकेशपाशीव्रतिनस्तुसटाजटा॥ ९७॥
वेणिःप्रवेणीशीर्षण्यशिरस्यौविशदेकचे॥ पाशःपक्षश्चहस्तश्चकलापार्थाःकचात्परे॥ ९८॥

तिख्यातस्य ।" शिखा । चूडा । केशपाशी । त्रीणिशिखायाः । केशपाश्यौ । सटा । जटा । द्वे व्रतिनः शिखायां ॥ ९७॥ वेणिः । प्रवेणी । द्वे सर्पाकारर चितकेशवेशस्य । वेणीत्यपि । "प्रवेणिरित्यपि । प्रवेणिःस्त्रीकुथावेण्योरितिमेदिनी ।" शीर्षण्यः । शिरस्यः । द्वे विशदेनिर्मलेकेशे । कचादित्यर्थप्रधा नोनिर्देशः । तेनकचपर्यायात् । परेपाशादयस्त्रयः कलापार्थाःकेशसमूहवाचिनइत्यर्थः । यथाकचपाशः । केशपाशः । केशपक्षः । कुंतलहस्तः ॥ ९८॥

तनूरुहं । रोम । लोम । त्रयंरोम्णः । पुंमुखेपुंसोवक्त्रेतस्यरोम्णोवृद्धौसत्यांतद्रोमश्मश्रुस्यात् । एकं । "दाढीइतिख्यातस्य । श्मश्रुणी । आकल्पः । वेषः । "वेशइतितालव्यांतोपि । वेशोवेश्यागृहेगृहे । नेपथ्येचेतिमेदिनी ।" नेपथ्यं । प्रतिकर्म । प्रसाधनं । पंचअलंकृतस्यशोभायां । नेपथ्यंतुप्रसाधने । रंगभूमौवेषभेदइतिहैमः । नेपथ्यशब्दःपुंस्यपि । नेपथ्यःस्यादलंकारेरंगज्यायांनपुंसकमितिमेदिनीकोशात् । प्रतिकर्मादिद्वयमलंकरणस्य

**तनूरुहंरोमलोमतद्वृद्धौश्मश्रुपुंमुखे॥ आकल्पवेषौनेपथ्यंप्रतिकर्मप्रसाधनं॥ ९९॥**
**दशैतेत्रिष्वलंकर्तालंकरिष्णुश्चमंडितः॥ प्रसाधितोलंकृतश्चभूषितश्चपरिष्कृतः॥ १००॥**
**विभ्राड्भ्राजिष्णुरोचिष्णुभूषणंस्यादलंक्रिया॥ अलंकारस्त्वाभरणंपरिष्कारोविभूषणं॥ १०१॥**

वा ॥ ९९ ॥ एतेअलंकर्त्रादयःवक्ष्यमाणादशशब्दास्त्रिषु । वाच्यलिंगाः । अलंकर्ता । अलंकरिष्णुः । द्वे अलंकर्तरि । अलंकर्तुंशीलमस्यालंकरिष्णुः । मंडितः । प्रसाधितः । अलंकृतः । भूषितः । परिष्कृतः । "परिस्कृतः ।" पंच अलंकृतस्य ॥ १०० ॥ विभ्राट् । भ्राजिष्णुः । रोचिष्णुः । त्रयमतिशयेनशोभमानस्य । विभ्राजौ । भूषणं । अलंक्रिया । द्वे भूषणक्रियायाः । " भूषातुस्यादलंक्रियेत्यपिपाठः ।" अलंकारः । आभरणं । परिष्कारः । परिस्कारः । विभूषणं ॥ १०१ ॥



मंडनं । पंचालंकारस्य । मुकुटं । "मकुटं ।" किरीटं । द्वे "किरीटस्य । तत्रकिरीटं पुंसिक्लीबेच ।" चूडामणिः । शिरोरत्नं । द्वे शिरोमणेः । हारमध्यगः हारमध्यगतोनायकमणिः तरलःस्यात् । एकं ॥ १०२ ॥ वालपाश्या । पारितथ्या । द्वे सीमंतभूषणस्य । " स्वामीतुप्रथमंवालंबंधनंमुक्तावलीनामित्याह । परितस्तथाभूतैवपारितथ्या ।" पत्रपाश्या । ललाटिका । द्वे ललाटभूषणस्य । कर्णिका । तालपत्रं । "ताडपत्रं ।" द्वे ताटंकस्य ।

**मंडनंचाथमुकुटंकिरीटंपुन्नपुंसकं॥ चूडामणिःशिरोरत्नंतरलोहारमध्यगः॥ १०२॥**
**वालपाश्यापारितथ्यापत्रपाश्याललाटिका॥ कर्णिकातालपत्रंस्यात्कुंडलंकर्णवेष्टनं॥ १०३॥**
**ग्रैवेयकंकंठभूषालंबनंस्याल्ललंतिका॥ स्वर्णैःप्रालंबिकाथोरःसूत्रिकामौक्तिकैःकृता॥ १०४॥**

तानवडइतिख्यातस्य । कुंडलं । कर्णवेष्टनं । द्वे कुंडलस्य । तत्रकर्णिकास्त्रीभिरेवधार्यते । इदंपुरुषैरपि ॥ १०३ ॥ ग्रैवेयकं । कंठभूषा । द्वे ग्रीवाभरणस्य । " ग्रैवेयंग्रैवेयंचेत्यन्यत्र " लंबनं । ललंतिका । द्वे आनाभिलंबितकंठिकायां । सैवललंतिकास्वर्णैःकृता प्रालंबिकास्यात् । एकं । सैवललंतिकामौक्तिकैरचिताचेदुरःसूत्रिकेत्येकं ॥ १०४ ॥

हारः । मुक्तावली "द्वे मुक्ताहारस्य" असौमुक्तावली शतयष्टिकाशतलतिकाचेत् देवच्छंदः । एकं । देवच्छंदो । यष्टिभेदाल्लतानांभेदात् गुच्छादयो हारभेदाःस्युः । "गुत्सगुत्सार्धगोस्तनाइत्यपिपाठः । " तेयथा । द्वात्रिंशद्यष्टिकोगुच्छः । चतुर्विंशतियष्टिकोगुच्छार्द्धः । चतुर्यष्टिकोगोस्तनः ॥ १०५ ॥ द्वादशयष्टिकोऽर्धहारः । विंशतियष्टिकोमाणवकः । एकयष्टिकाएकावली । सैवैकावलीसप्तविंशतिमौक्तिकैःकृता नक्षत्रमालास्यात् । एकैकं । ॥ १०६ ॥ आवापकः । पारिहार्यः । कटकः । वलयः । चत्वारिप्रकोष्ठाभरणस्य । "पोंचीइत्यादिख्यातस्य ।" केयूरं । अंगदं । द्वे प्रगंडभूषणस्य ।

हारोमुक्तावलीदेवच्छंदोसौशतयष्टिका ॥ हारभेदायष्टिभेदाद्गुच्छगुच्छार्धगोस्तनाः ॥ १०५ ॥
अर्धहारोमाणवकएकावल्येकयष्टिका ॥ सैवनक्षत्रमालास्यात्सप्तविंशतिमौक्तिकैः ॥ १०६ ॥
आवापकःपारिहार्यःकटकोवलयोस्त्रियां ॥ केयूरमंगदंतुल्ये अंगुलीयकमूर्मिका ॥ १०७ ॥
साक्षरांऽगुलिमुद्रास्यात्कंकणंकरभूषणं ॥ स्त्रीकट्यांमेखलाकांचीसप्तकीरशनातथा ॥ १०८ ॥

" बाहुवटे. बाजुबंदइतिख्यातस्य ।" केबाहुशिरसियौतिकेयूरं । युमिश्रणे । अंगुलीयकं ऊर्मिका । द्वे अंगुल्याभरणस्य । आंगठीइतिख्यातस्य । ॥ १०७ ॥ ऊर्मिकैवरामनामाद्यक्षरयुताचेदंगुलिमुद्रेत्येकं । कंकणं । करभूषणं । द्वे मणिबंधभूषणस्य । "कांकणें इतिख्यातस्य ।" कंकणोनाप्र तीसरइतिरत्नकोशः । मेखला । कांची । "कांचिः ।" सप्तकी । रशना । "दंतमध्यापि " ॥ १०८ ॥

सारसनं । पंचस्त्रीणांकटिभूषणस्य । "दाब. कंबरपट्टाइतिख्यातस्य । एकयष्टिर्भवेत्कांचीमेखलात्वष्टयष्टिका । रसनाषोडशज्ञेयाकलापःपंचविंश कइतिभेदास्त्विहनोक्ताः ।" शृंखलमित्येकंपुंसःकटिभूषणस्य । "कडदोराइतिख्यातस्य ।" शृंखला । शृंखलः । पादांगुदं । तुलाकोटिः । "तुला कोटी " मंजीरः । "मजीलः " नूपुरः ॥ १०९ ॥ हंसकः । पादकटकः । षड्नूपुरस्य । "तोरड्या. पैजणइतिख्यातस्य । हंसकादिद्वयंपादकटक स्य । वाळेइतिख्यातस्येतिमतं ।" तुलाकोटिःस्त्री । मंजीरोनस्त्रियां । किंकिणी । "किंकिणिः । कंकणी । कंकणःस्यात्प्रतिसरःकंकणीक्षुद्रघंटिके

क्लीबेसारसनंचाथपुंस्कट्यांशृंखलंत्रिषु ॥ पादांगुदंतुलाकोटिर्मंजीरोनूपुरोऽस्त्रियां ॥ १०९ ॥
हंसकःपादकटकःकिंकिणीक्षुद्रघंटिका ॥ त्वक्फलकृमिरोमाणिवस्त्रयोनिर्दशत्रिषु ॥ ११० ॥

तिभागुरिः ।" क्षुद्रघंटिका । द्वे घागरी । "घुंगुर " इतिख्यातायाः । त्वगादिचतुष्कं वस्त्राणांयोनिःकारणं । कारणचातुर्विध्यात् वस्त्राणांचातुर्विध्य मितिभावः । क्षौमादित्येतद्दिनावाल्कफालादयोनिष्प्रवाण्यंतादशत्रिषु । तंत्रकंचेतिचकारादेकादशंतंत्रकंचत्रिषु । वक्ष्यमाणदुकूलसाहचर्यात्क्षौमं क्लीबमेव । त्रिष्विंत्येके ॥ ११० ॥

त्वगादिजन्यादिक्रमेणाभिहितानि । क्षौमादिवस्त्रंवाल्कंज्ञेयं । क्षुमाअतसीतद्विकारः क्षौमं । आदिनाशाणमित्यादि । एकं । त्वङ्मयस्य । फालं कार्पासं । बादरं । त्रीणिकार्पासवस्त्रस्य । कृमीणामपाननिर्गतसूत्रकृतः कुड्मलाकारः कोशः कृमिकोशस्तस्मादुत्थंकौशेयंस्यात् । मृगरोमजंवस्त्रंरांकवमित्येकं । "अत्रमृगशब्देनपशुमात्रंग्राह्यं । तेनकंबलाद्यपि" ॥ १११ ॥ अनाहतं । निष्प्रवाणि । तंत्रकं । नवांबरं । चत्वारिनूतनवस्त्रस्य ।

वाल्कंक्षौमादिफालंतुकार्पासंबादरंचतत् ॥ कौशेयंकृमिकोशोत्थंरांकवंमृगरोमजं ॥ १११ ॥
अनाहतंनिष्प्रवाणितंत्रकंचनवांबरं ॥ तत्स्यादुद्गमनीयंयद्धौतयोर्वस्त्रयोर्युगं ॥ ११२ ॥
पत्रोर्णंधौतकौशेयंबहुमूल्यंमहाधनं ॥ क्षौमंदुकूलंस्याद्द्वेतुनिवीतंप्रावृतंत्रिषु ॥ ११३ ॥

कोरेंवस्त्रइतिप्रसिद्धस्य । निर्गताप्रवाणीतंतुवायशलाकाऽस्मात्निष्प्रवाणि धौतयोर्वस्त्रयोर्युगंयत्तदुद्गमनीयमित्येकं । " युगमित्यविवक्षणं ।" ॥ ११२ ॥ यद्धौतंकौशेयंतत्पत्रोर्णं । एकं । बहुमूल्यं यद्वस्त्रादिकंतन्महाधनमित्येकं । त्रिलिंगं । क्षौमं । दुकूलं । द्वे पट्टवस्त्रस्य । "पाटांबरइतिख्यातस्य ।" निवीतं । प्रावृतं । द्वे प्रावृतवस्त्रस्य ॥ ११३ ॥



वस्त्रस्यद्वयोर्वस्तयोः प्रांतयोः दशाःस्युः । एकं स्त्रीलिंगंबहुवचनांतंचनित्यं । "वस्तयोर्द्वयोरितिपाठेतु । दशाः । वस्तयः । द्वे वस्त्रप्रांतयोः । तत्रस्त्रियां बहुत्वेदशाः । स्त्रीपुंसयोर्बहुत्वेचवस्तयः । दशावस्थादीपवर्त्योर्वस्त्रांतेभूम्नियोषिति । वस्तिर्द्वयोर्निरूहेनाभ्यधोभूम्निदशासुचेतिमेदिनी ।" दैर्घ्यं । आयामः । आरोहः । "आनाहइतिरामाश्रमीकारः ।" त्रयंवस्त्रादेर्दैर्घ्यस्य । "लांबीइतिख्यातस्य ।" परिणाहः । विशालता । द्वे विस्तारस्य । रुंदीइतिख्यातस्य ॥ ११४ ॥ पटच्चरं । जीर्णवस्त्रं । द्वे जीर्णवस्त्रस्य । नक्तकः । "लक्तकइत्यपि ।" कर्पटः । द्वे जीर्णवस्त्रखंडस्य । "फडकें. छाटीइति

स्त्रियांबहुत्वेवस्त्रस्यदशाःस्युर्वस्तयोर्द्वयोः ॥ दैर्घ्यमायामआरोहःपरिणाहोविशालता ॥ ११४ ॥ पटच्चरंजीर्णवस्त्रं
समौनक्तककर्पटौ ॥ वस्त्रमाच्छादनंवासश्चैलंवसनमंशुकं ॥ ११५ ॥ सुचेलकःपटोस्त्रीस्याद्वराशिःस्थूलशाटकः ॥
निचोलःप्रच्छदपटःसमौरल्लककंबलौ ॥ ११६ ॥

ख्यातस्य ।" वस्त्रं । आच्छादनं । वासः । चैलं । 'चेलं । चेलोधमेत्रिषु । नपुंसकंतुवसनइतिविश्वः ।" वसनं । अंशुकं । षट्वस्त्रस्य । " अंशुकंशुक्लवस्त्रेस्याद्वस्त्रमात्रोत्तरीययोरितिरभसः ॥ ११५ ॥ सुचेलकः । पटः । द्वे शोभनवस्त्रस्य तत्रपटोऽस्त्री । वराशिः । "वरासिः । वरासिःस्यात्खड्गवरेवरसिःस्थूलशाटकइतिदंत्यांतेपुरभसः ।" स्थूलशाटकः । द्वे स्थूलवाससः । निचोलः । "निचुलोपि । निचुलस्तुनिचोलेस्यादितिमेदिनी ।" प्रच्छदपटः । द्वे येनवीणाडोलिकादिकंकिमपिधीयतेतस्य । रल्लकः । कंबलः । द्वे कंबलस्य ॥ ११६ ॥

अंतरीयं । उपसंव्यानं । परिधानं । अधोंशुकं । चत्वारिपरिहितेवाससि । "अधोदेहभागस्यांशुकं अधोंशुकं ।" प्रावारः । "प्रावरः" उत्तरासंगः । बृहतिका ॥ ११७ ॥ संव्यानं । उत्तरीयं । पंच वामस्कंधे यद्धार्यतेतस्यउत्तरीयस्य । "उत्तरस्मिन् देहभागे आसज्जतइत्युत्तरासंगः ।" चोलः । कूर्पासकः । द्वे स्त्रीणांस्तनादिपिधायकस्य । कंचुकीतिप्रसिद्धस्य । "गौरादित्वात्ङीषिचोलीत्यपि । कूर्परेआस्तेकूर्पासकः । पुंसिक्लीबेच ।" हिमानि

अंतरीयोपसंव्यानपरिधानान्यधोंऽशुके ॥ द्वौप्रावारोत्तरासंगौसमौबृहतिकातथा ॥ ११७ ॥
संव्यानमुत्तरीयंस्याच्चोलःकूर्पासकोस्त्रियां ॥ नीशारःस्यात्प्रावरणेहिमाऽनिलनिवारणे ॥ ११८ ॥
अर्धोरुकंवरस्त्रीणांस्याच्चंडातकमस्त्रियां ॥ स्यात्त्रिष्वाप्रपदीनंतत्प्राप्नोत्याप्रपदंहियत् ॥ ११९ ॥

लयोर्निवारणंयस्मात्तादृशेप्रावरणेनीशार इत्येकं । "रजई इत्यादिख्यातस्य । नितरांशीर्यतेहिमानिलावत्रानेनवा ।" गौरिवाकृतनीशारइतिप्रयोगः । ॥ ११८ ॥ यद्वरस्त्रीणांअर्धोरुकं अर्धोरुपिधायिकंवस्त्रंतच्चंडातकंस्यात् । एकं । "परकर. लहंगाइतिख्यातस्य " ऊर्वोरर्धमर्द्धोरु तत्रस्थितत्वाल्लक्षणयावस्त्रमप्यर्धोरु स्वार्थेकन् । यत्आप्रपदंपादाग्रपर्यंतंप्राप्नोतिवस्त्रादितत्आप्रपदीनं । त्रिषु । एकं ॥ ११९ ॥

वितानं । उल्लोचः । द्वे आतपाद्यपनयार्थमुपरिबद्धस्यचंद्रकाख्यस्य वाससः । "चांदवाइतिख्यातस्य ।" पुंसिवितानः । दूष्यमित्यादिकं वस्त्रवेश्मनि वस्त्ररचितगृहे । एकं । "दूश्यमितितालव्यमध्यमपि " । आद्यशब्दात्पटकुटी । " डेराराहुटी " इत्यादि । प्रतिसीरा । जवनिका । "यमनिका " तिरस्करिणी । " तिरस्कारिणी ।" त्रयंजवनिकायाः । पडदा " कनाथ " इतिख्यातायाः ॥ १२० ॥ परिकर्म । अंगसंस्कारः । द्वे कुंकुमादिनाशरीरे संस्कारमात्रस्य । "परिमलवर्जनार्थाक्रियापरिकर्म । प्रतिकर्मेतिक्वचित्पाठः । मार्ष्टिः । मार्जना । मृजा । प्रोक्षणादिनादेहनिर्मलीकरणस्य । उद्वर्तनं ।

अस्त्रीवितानमुल्लोचोदूष्याद्यंवस्त्रवेश्मनि ॥ प्रतिसीराजवनिकास्यात्तिरस्करिणीचसा ॥ १२० ॥
परिकर्मांगसंस्कारःस्यान्मार्ष्टिर्मार्जनामृजा ॥ उद्वर्तनोत्सादनेद्वेसमेआप्लावआप्लवः ॥ १२१ ॥
स्नानंचर्चातुचार्चिक्यंस्थासकोथप्रबोधनं ॥ अनुबोधःपत्रलेखापत्रांगुलिरिमेसमे ॥ १२२ ॥

उत्सादनं । द्वे पिष्टादिनाशरीरमलापकरणस्य । आप्लावः । आप्लवः ॥ १२१ ॥ स्नानं । त्रीणिस्नानस्य । चर्चा । चार्चिक्यं । स्थासकः । त्रीणिचंदनादिना देहविलेपविशेषस्य । उटीइतिख्यातस्य । चर्चिकैवचार्चिक्यं ।" प्रबोधनं । अनुबोधः । द्वयंगतगंधस्य । पुनर्गंधव्यक्तीकरणे । यथाकस्तूरिकादेर्मद्यादिना । पत्रलेखा । पत्रांगुलिः । द्वे कस्तूरिकाकेशरादिनाकपोलादौरचितपत्रवल्लयाः । पत्राकृतिर्लेखापत्रलेखा । कलिंगादिदेशेषुप्रसिद्धेयं ॥ १२२ ॥

तमालपत्रं । तिलकं । चित्रकं । विशेषकं । चत्वारिललाटेकस्तूर्यादिनाकृततिलकस्य । "तमालस्तिलकेखड्गइतिविश्वात्तमालइत्यप्यन्यत्र । अत्र द्वितीयंतिलकमितितुरीयंविशेषकमितिचद्वे नस्त्रियां । किंतुपुन्नपुंसकयोः । कुंकुमं ॥ १२३ ॥ काश्मीरजन्म । अग्निशिखं । वरं । बाल्हीकं । "बाल्हिकं । बाह्लीकंबाह्लिकंधीर हिंगुनोर्नाश्वदेशयोरितित्रिकांडशेषः ।" पीतनं । रक्तं । संकोचनं । पिशुनं । धीरं । लोहितचंदनं । एकादशकुंकुम



तमालपत्रतिलकचित्रकाणिविशेषकं ॥ द्वितीयंचतुरीयंचनस्त्रियामथकुंकुमं ॥ १२३ ॥
काश्मीरजन्माग्निशिखंवरंबाह्लीकपीतने ॥ रक्तसंकोचपिशुनंधीरंलोहितचंदनं ॥ १२४ ॥
लाक्षाराक्षाजतुक्लीबेयावोलक्तोद्रुमामयः ॥ लवंगंदेवकुसुमंश्रीसंज्ञमथजायकं ॥ १२५ ॥

स्य । रक्तनील्यादिरंजिते कुंकुमइतिहैमः । संकोचोमीनभेदेचबुधेक्लीबंतुकुंकुमइतिविश्वमेदिन्यौ । पिशुनं कुंकुमेपिचेतिमेदिनी ॥ १२४ ॥ लाक्षा । राक्षा । जतु । यावः । अलक्तकः । द्रुमामयः । षङ्कलाक्षायाः । "नलक्तोस्मादलक्तः । द्रुमाणामामयोद्रुमामयः ।" लवंगं । देवकुसुमं । श्रीसंज्ञं । त्रीणिलवंगस्य । देवानांकुसुमं कुसुमेषुदेवइवदेवयोग्यंकुसुमंवा । श्रीसंज्ञंलक्ष्मीपर्यायनामकं । जायकं ॥ १२५ ॥



कालीयकं । कालानुसार्यं । त्रयंजायकाख्यगंधद्रव्यस्य । पीतचंदनइतिख्यातस्य । जयतिगंधांतरं जायकं । कालीयकंचकालेयंवर्णकंकांतिदायकमितिव्याडिः । वंशिकं । "वंशकं । अगुरु । राजार्हं । लोहं । कृमिजं । जोंगकं ॥ १२६ ॥ कालागुरु । सप्तकंसमार्थकं । कृष्णागुरुणः पर्यायाइत्यर्थः "नगुरुर्यस्मातद्गुरुः । अगुरुर्जोंगकेलघाविति हैमादगुरुःपुंस्यपि । अगरुरितिकचित् । लोहोऽस्त्रीशस्त्रकेलौहेजांगकेसर्वतैजसइतिमेदिनीकोशाल्लोहं पुंस्यपि ।" अगरुइत्यस्ययच्छब्देनसंबंधःस्यादित्यस्यत्वंतत्वादुत्तरेणसंबंधः । यदगुरुमल्लिगंधि सामंगल्यास्यादित्येकं । "अत्रजोंगकांतानिअगुरु

कालीयकंचकालानुसार्यंचाथसमार्थकं ॥ वंशिकागुरुराजार्हलोहंकृमिजजोंगकं ॥ १२६ ॥ कालागुर्वगुरुस्यात्तुमंगल्यामल्लिगंधियत् ॥ यक्षधूपःसर्जरसोरालसर्वरसावपि ॥ १२७ ॥ बहुरूपोप्यथवृकधूपकृत्रिमधूपकौ ॥ तुरुष्कःपिंडकःसिह्लोयावनोप्यथपायसः ॥ १२८ ॥

णः । कालागुर्वादिद्वयंकृष्णागुरुणः । त्वित्यत्रतदितिपाठ स्तत्रयदगुरुमल्लिगंधितन्मंगल्येत्यर्थः । यक्षधूपः । सर्जरसः । रालः । सर्वरसः ॥ १२७ ॥ बहुरूपः । पंचधूपस्य "राळइतिख्यातस्य । अरालइतिवा । रालःसर्जरसोरालोधूपकोवह्निवल्लभइतिरभसः । वृकधूपः । कृत्रिमधूपकः । द्वे अनेकपदार्थकृतधूपस्य । तुरुष्कः । पिंडकः । सिह्लः । यावनः । चत्वारिसिल्हाख्यगंधद्रव्यस्य । "ऊद· लोबानइतिख्यातस्य" पायसः ॥ १२८ ॥

श्रीवासः । वृकधूपः । श्रीवेष्टः । "श्रीपिष्टः । सरलद्रवश्रीपिष्टदधिक्षीरघृताव्हयइतिरभसः ।" सरलद्रवः । पंचसरलद्रवस्य । " विशेषनामकधूपइतिख्यातस्य । पयसोद्रुमस्यक्षीरस्यवाविकारः पायसः । सरलस्य देवदारोर्द्रवः सरलद्रवः । पायसस्तुक्लीबपुंसोःश्रीवासपरमान्नयोरितिमेदिनी । मृगनाभिः । मृगमदः । कस्तूरी । त्रयंकस्तूर्याः । मृगनाभिः पुंसि । मृगनाभिर्मृगमदोमृगःकस्तूरिकापिचेतिमाधवः । मदोरेतसिकस्तूर्यामितिमेदि

**श्रीवासोवृकधूपोपिश्रीवेष्टसरलद्रवौ॥ मृगनाभिर्मृगमदःकस्तूरीचाथकोलकं॥ १२९॥**
**कंकोलकंकोशफलमथकर्पूरमस्त्रियां॥ घनसारश्चंद्रसंज्ञःसिताभ्रोहिमवालुका॥ १३०॥**

नी । मुख्यराट्क्षत्रियोनाभिःपुंसिप्राण्यंगकेद्वयोः । चक्रमध्येप्रपानेचस्त्रियांकस्तूरिकामदइतिरभसः ।" कोलकं । कोरकं । कोरकोऽस्त्रीकुड्मले स्यात्कंकोलकमृणालयोरितिमेदिनी ॥ १२९ ॥ कंकोलकं । कोशफलं । त्रीणिकंकोळ· गवलाइतिख्यातस्य । कर्पूरं । घनसारः । चंद्रः । सिताभ्रः । सिताभइत्यपि । हिमवालुका । पंचकर्पूरस्य । चंद्रसंज्ञश्चंद्रपर्यायनामकः । पुंसिकर्पूरः ॥ १३० ॥



गंधसारः । मलयजः । भद्रश्रीः । चंदनः । चत्वारिचंदनस्य । "मलयागुरु । मैलागिरिइतिख्यातस्य ।" भद्रश्रियौ । तैलपर्णिकमित्येकंधवलशीतलचंदनविशेषस्य । गोशीर्षकमित्येकंउत्पलगंधिचंदनस्य हरिचंदनमित्येकं कपिलवर्णचंदनस्य । एवंत्रयोभेदाः । तिलपर्णेवृक्षभेदेजातातैलपर्णी । स्वार्थेकन् । तैलपर्णगोशीर्षौगिरी आकरावस्येतिस्वामी ॥ १३१ ॥ तिलपर्णी । पत्रांगं । रंजनं । रक्तचंदनं । कुचंदनं । पंच रक्तचंदनस्य । "ति

**गंधसारोमलयजोभद्रश्रीश्चंदनोऽस्त्रियां॥ तैलपर्णिकगोशीर्षेहरिचंदनमस्त्रियां॥ १३१॥**
**तिलपर्णीतुपत्रांगंरंजनंरक्तचंदनं॥ कुचंदनंचाथजातीकोशजातीफलेसमे॥ १३२॥**

लपर्णीनदीआकरोऽस्यास्तिअच् । ङीष्च ।" जातीकोशं । जातीफलं । जातिकोशंजातिफलमित्यपिपाठः । जातिः । जातीवा । कोशं । फलं । इतिपृथगपि । जातिर्जातिफलेपिचेतिरभसः । कोशोऽस्त्रीकुड्मलेपत्रेदिव्येखड्गपिधानके । जातिकोशेइतिमेदिनीविश्वप्रकाशौ । फलंलाभेजातिकोशेबाणाग्रेफलकेपिचेतिरुद्रः । द्वे जायफळइतिख्यातस्य ॥ १३२ ॥

कर्पूरादिभिः समभागैः पिंडीकृतोलेपविशेषोयक्षकर्दमइत्येकं । "कर्पूरागरुकस्तूरीकंकोलघुसृणानिच । एकीकृतमिदंसर्वंयक्षकर्दमइष्यतइति व्याडिः । घुसृणंकेशरं । अन्यत्स्पष्टं । कुंकुमागरुकस्तूरीकर्पूरंचंदनंतथा । महासुगंधिरित्युक्तंनामतोयक्षकर्दमइतिधन्वंतरिः ।" गात्राऽनुलेपनी । वर्त्तिः । वर्णकं । विलेपनं । चत्वारि "गात्रानुलेपयोग्यस्य । पिष्टघृष्टसुगंधिद्रव्यस्य । उटणेंइतिख्यातस्य । गात्रानुलेपनीवर्तिर्विगंध्यथविलेपनं ।

कर्पूरागरुकस्तूरीकंकोलैर्यक्षकर्दमः ॥ गात्रानुलेपनीवर्तिर्वर्णकंस्याद्विलेपनं ॥ १३३ ॥
चूर्णानिवासयोगाःस्युर्भावितंवासितंत्रिषु ॥ संस्कारोगंधमाल्याद्यैर्यःस्यात्तदधिवासनं ॥ १३४ ॥

वर्णकंचाथविच्छित्तिःस्त्रीकषायोंगरागकइतिरभसात् । आद्यद्वयमुक्तार्थमेव । वर्णकादिद्वयंघृष्टचंदनादिलेपमात्रस्य ।" ॥ १३३ ॥ चूर्णं । वासयोगः । द्वे पटवासादिचूर्णमात्रस्य । "वासेसुगंधिकरणे योगउपायोवासयोगः ।" भावितं । वासितं । द्वे गंधद्रव्येणवासितस्य वस्तुनः । त्रिषु । गंधमाल्यधूपादिभिर्यः संस्कारः । "वस्त्रतांबूलादीनां ।" सौरभाधानं तदधिवासनमित्युच्यते । एकं ॥ १३४ ॥



[illegible]ला । स्रक् । त्रयंमूर्ध्निधृतायाःकुसुमावलेः । उपचारादन्यत्रापिप्रयोगः । केशमध्येधृतामालागर्भकइत्युच्यते । एकं । यन्माल्यंशिखायां [illegible]तत्प्रभ्रष्टकमित्येकं । पुरोन्यस्तं ललाटपर्यंतंक्षिप्तं ललामकमित्येकं ॥ १३५ ॥ यन्माल्यं कंठादृजुलंबिसरलंलंबमानंतत्प्रालंबमित्येकं । यन्माल्यंतिर्यगुपवीतमनृजु उरसिक्षिप्तंतत्वैकक्षिकमित्येकंचतुरक्षरं । "विकक्षमुरस्तत्रभवंवैकक्षकमित्यपि ।" आपीडः । शेखरः । द्वे शिखास्रुन्यस्तमाल्यमात्रस्य ॥ १३६ ॥ रचना । परिस्यंदः । द्वे माल्यादिरचनायाः । "परिस्पंदइत्यपिपाठः ।" आभोगः । परिपूर्णता । द्वे सर्वोपचारपरिपूर्णतायाः ।

माल्यंमालास्रजौमूर्ध्निकेशमध्येतुगर्भकः ॥ प्रभ्रष्टकंशिखालंबिपुरोन्यस्तंललामकं ॥ १३५ ॥ प्रालंबमृजुलंबिस्यात्कंठाद्वैकक्षिकंतुतत् ॥ यत्तिर्यक्क्षिप्तमुरसिशिखास्वापीडशेखरौ ॥ १३६ ॥ रचनास्यात्परिस्यंदआभोगःपरिपूर्णता ॥ उपधानंतूपबर्हःशय्यायांशयनीयवत् ॥ १३७ ॥ शयनंमंचपर्यंकपल्यंकाःखट्वयासमाः ॥ गेंदुकःकंदुकोदीपःप्रदीपःपीठमासनं ॥ १३८ ॥

उपधानं । उपबर्हः । द्वे उच्छीर्षस्य । "उशीइतिख्यातस्य" उपधीयते आरोप्यतेशिरोत्र उपधानं । शय्या । शयनीयं ॥ १३७ ॥ शयनं । त्रीणिशय्यायाः । वदितिउत्तरेणसमत्वद्योतनाय । मंचः । पर्यंकः । पल्यंकः । खट्वा । चत्वारिखट्वायाः । पलंग बाजइतिख्यातायाः" गेंदुकः । "गेंडुकः । गंडूकः ।" कंदुकः । द्वे चेंडूइतिख्यातस्य । क्रीडाकारणस्य । "गिरदी॰ गालउशीइतिख्यातस्येति केचित् ।" दीपः । प्रदीपः । द्वे दीपस्य । पीठं । आसनं । द्वे "विष्टरःपीठमस्त्रियामितित्रिकांडशेषः ।" ॥ १३८ ॥

समुद्गकः। संपुटकः। द्वे संपुटस्य। "डबा॰ चौफुलाइत्यादिख्यातस्य।" प्रतिग्राहः। "प्रतिग्रहः। प्रतिग्रहःस्वीकरणेसैन्यपृष्ठेपतद्ग्रहे। विप्रेभ्योविधिवद्देयेतद्ग्रहेचग्रहांतरइतिमेदिनी।" पतद्ग्रहः। द्वे "पिकदानीइतिख्यातस्य।" प्रसाधनी। कंकतिका। द्वे गजदंतादिरचितायाः केशमार्जन्याः। फणीइतिख्यातायाः। कंकतंतुप्रसाधनमितिक्लीबकांडेऽमरमाला। पिष्टातः। पटवासकः। द्वे बुकाइतिख्यातस्यचूर्णविशेषस्य॥ १३९॥ दर्पणः। मुकुरः। "मकुरः। मकुरःस्यान्मुकुरवद्दर्पणेबकुलद्रुमे। कुलालदंडेइतिमेदिनी। मंकुरइत्यपिकेचित्।" आदर्शः। त्रीणि दर्पणस्य। "आरसाइति

समुद्गकःसंपुटकःप्रतिग्राहःपतद्ग्रहः॥ प्रसाधनीकंकतिकापिष्टातःपटवासकः॥ १३९॥
दर्पणेमुकुरादर्शौव्यजनंतालवृंतकं॥ ॥इतिमनुष्यवर्गः॥ ॥ ६॥ ॥ ६॥
संततिर्गोत्रजननकुलान्यभिजनान्वयौ॥ वंशोन्ववायःसंतानोवर्णाःस्युर्ब्राह्मणादयः॥ १॥

ख्यातस्य।" साहचर्याद्दर्पणःपुंस्येव। आदर्शोदर्पणः प्रोक्तइत्यमरमाला।" व्यजनं। तालवृंतकं। द्वे तालपत्रादिनिर्मितव्यजनस्य। व्यजति वायुर [illegible]व्यजनं॥ ॥इतिमनुष्यवर्गः॥ ॥ ६॥ संततिः। गोत्रं। जननं। कुलं। अभिजनः। अन्वयः। वंशः। अन्ववायः। संतानः। नव वं[illegible]शस्य। [illegible]संततिःस्त्री। ब्राह्मणादयोवर्णाःस्युः। एकं॥ १॥



[illegible]ह्मणक्षत्रियवैश्यशूद्राः वर्णाश्चातुर्वर्ण्यमित्येकं। राजबीजी। राजवंश्यः। द्वे राजवंशोत्पन्नस्य। राजबीजिनौ। बीज्यः। कुलसंभवः। द्वे कुलमा[illegible]गतस्य॥ २॥ महाकुलः। "माहाकुलः।" कुलीनः। आर्यः। सभ्यः। सज्जनः। साधुः। षट् सज्जनस्य। ब्रह्मचार्यादयश्चत्वारोपिआश्रमशब्दवाच्याइत्यर्थः। एकं। "वनमेवप्रस्थः प्रदेशस्तत्रभवः वानप्रस्थः। अत्रभिक्षुर्यतिः॥३॥ द्विजातिः। अग्रजन्मा। भूदेवः। बाडवः। विप्रः। ब्राह्म

विप्रक्षत्रियविट्शूद्राश्चातुर्वर्ण्यमितिस्मृतं॥ राजबीजीराजवंश्योबीज्यस्तुकुलसंभवः॥ २॥
महाकुलकुलीनार्यसभ्यसज्जनसाधवः॥ ब्रह्मचारीगृहीवानप्रस्थोभिक्षुश्चतुष्टये॥ ३॥
आश्रमोस्त्रीद्विजात्यग्रजन्मभूदेववाडवाः॥ विप्रश्चब्राह्मणोऽसौषट्कर्मायागादिभिर्वृतः॥ ४॥
विद्वान्विपश्चिद्दोषज्ञःसन्सुधीःकोविदोबुधः॥ धीरोमनीषीज्ञःप्राज्ञःसंख्यावान्पंडितःकविः॥ ५॥

णः। षट् ब्राह्मणस्य। "वडवायांजातोवाडवः। वडवाद्विजयोषितीतिमेदिनी।" असौब्राह्मणोयागादिभिर्यजनादिभिर्युक्तः षट्कर्मास्यात्। तदुक्तं। ईज्याध्ययनदानानियाजनाध्यापनेतथा। प्रतिग्रहश्चतैर्युक्तःषट्कर्माविप्रउच्यतइति। एकं॥ ४॥ विद्वान्। विपश्चित्। दोषज्ञः। सन्। सुधीः। कोविदः। बुधः। धीरः। मनीषी। ज्ञः। प्राज्ञः। "प्रज्ञः। प्रज्ञस्तुपंडितेवाच्यलिंगोबुद्धौतुयोषितीतिमेदिनी।" संख्यावान्। पंडितः। कविः॥ ५॥

धीमान् । सूरिः । कृती । कृष्टिः । लब्धवर्णः । विचक्षणः। दूरदर्शी । दीर्घदर्शी । द्वाविंशतिःपंडितस्य । विद्वांसौ । विपश्चितौ । संतौ । ज्ञौ । संख्यावंतौ । कृतिनौ । "संख्याविचारणास्यस्य संख्यावान् । लब्धोवर्णः स्तुतिर्येनलब्धवर्णः । दूरान्दूराद्वापश्यतीतिदूरदर्शी ।" श्रोत्रियः । छांदसः । द्वे वेदाध्यायिनः ॥ ६ ॥ मीमांसकमित्यादिपद्यद्वयमत्रकेचित्पठंति । तदत्रत्यंनेत्युपेक्षितं । तस्येयं बालबोधार्थंव्याख्या । मीमांसकः । जैमिनीयः । द्वे

धीमान्सूरिःकृतीकृष्टिर्लब्धवर्णोविचक्षणः ॥ दूरदर्शीदीर्घदर्शीश्रोत्रियश्छांदसौसमौ ॥ ६ ॥
मीमांसकोजैमिनीयेवेदांतीब्रह्मवादिनि ॥ वैशेषिकेस्यादौलूक्यःसौगतःशून्यवादिनि ॥ १ ॥
नैयायिकस्त्वक्षपादःस्यात्स्याद्वादिकआर्हकः ॥ चार्वाकलौकायतिकौसत्कार्येसांख्यकापिलौ ॥ २ ॥

मीमांसाशास्त्रवेत्तुः वेदांती । ब्रह्मवादी । द्वे वेदांतशास्त्रज्ञस्य । वैशेषिकः । औलूक्यः । द्वे सप्तपदार्थवादिनः । सौगतः । शून्यवादी । द्वे जगत्कारणं शून्यमिति मतावलंबिनोनास्तिकस्य ॥ १ ॥ नैयायिकः । अक्षपादः । आक्षपादोवा । द्वे न्यायशास्त्रज्ञस्य । स्याद्वादिकः । आर्हकः । द्वे मोक्षोऽस्तिस्यान्नास्तिस्यादिति वादिनः । चार्वाकः । लौकायतिकः । लोकायतिकोवा । द्वे देहात्मवादिनोबौद्धस्य । सांख्यः । कापिलः । द्वे तदेवेदं कार्यंजगदिति[illegible]मानिनः । सांख्यशास्त्रज्ञस्य ॥ २ ॥



उपाध्यायः । अध्यापकः । द्वे "उपेत्याधीयतेऽस्मादुपाध्यायः । अध्यापयतीत्यध्यापकः ।" निषेकोगर्भाधानं । आदिनापुंसवनादि । तस्यकर्मणःकर्ता पित्रादिर्गुरुः स्यात् । एकं । मंत्रोवेदस्तस्यव्याख्याकृत्आचार्यःस्यात् । एकं । व्याख्यालक्षणंतु । पदच्छेदःपदार्थोक्तिर्विग्रहोवाक्ययोजना । आक्षेपोथसमाधानंव्याख्यानंपंचलक्षणमित्युक्तं । अध्वरे यागविषये यऋत्विजामादेष्टा सव्रती ॥ ७ ॥ यष्टा । यजमानः । इतित्रयेणोच्यते "आदिष्टीत्यपिपाठः ।" व्रतिनौ । यष्टारौ । सयजमानः सोमवतियागे आदेष्टादीक्षितइत्युच्यते । एकं । इज्याशीलः । यायजूकः । द्वे यजनशीलस्य

उपाध्यायोध्यापकोऽथस्यान्निषेकादिकृद्गुरुः ॥ मंत्रव्याख्याकृदाचार्यआदेष्टात्वध्वरेव्रती ॥ ७ ॥
यष्टाचयजमानश्चससोमवतिदीक्षितः ॥ इज्याशीलोयायजूकोयज्वातुविधिनेष्टवान् ॥ ८ ॥
सगीष्पतीष्ट्यास्थपतिःसोमपीथीतुसोमपाः ॥ सर्ववेदाःसयेनेष्टोयागःसर्वस्वदक्षिणः ॥ ९ ॥

"पुनःपुनः भृशंवायजतेयायजूकः ।" विधिनासोमेनयजेतेत्यादियागविधायकविधिमात्रेणेष्टवान् यागंकृतवान् सयज्वास्यात् । एकं । यज्वानौ । ॥ ८ ॥ यः गीष्पतीष्ट्याबृहस्पतिसवविधिनाइष्टवान्सस्थपतिरित्युच्यते । वाजपेयेनेष्ट्वाबृहस्पतिसवेनयजेतेतितद्विधिः । एकं । सोमपीथी । "सोमपीती । सोमपीवी ।" सोमपाः । "सोमपः । द्वे सोमयाजिनः । सोमपीथिनौ "सर्वदाऽयंदीक्षितस्तुतत्कालं ।" येनसर्वस्वदक्षिणोविश्वजिन्नामायागइष्टः ससर्ववेदाःस्यात् । एकं । "सर्वस्वंदक्षिणायत्र । सर्वंवेदयतिसर्ववेदाः । विद्लृलाभे " सर्ववेदसौ ॥ ९ ॥

सांगे शिक्षाद्यंगोपेते प्रवचने वेदे अधीती कृताध्ययनोऽनूचान इत्येकं । योऽनूचानो गुरोः सकाशात् गृहस्थाद्याश्रमांतरप्राप्तये लब्धानुज्ञः समावृत्तः स्यात् । एकं । अभिषवे स्नाने कृते सति सुत्वा स्यात् । सुयजोर्ङ्वनिबिति सुनोतेर्भूते ङ्वनिप् । सुतवान् । सुत्वा । सुत्वानौ । अभिषवः स्नपने पीडने स्नाने सुरासंधाने च ॥ १० ॥ छात्रः । अंतेवासी । "अंतवासीत्यपि । शिष्यः । त्रीणि गुरोर्दोषाच्छादनं छात्रं तच्छीलमस्य छात्रः । अंते समीपे वस्तुं शीलमस्यांतेवासी ।" शैक्षाः । प्राथमकल्पिकाः । द्वे आरब्धाध्ययनानां बटूनां शिक्षा लभंते ते शैक्षाः । प्रथमकल्पः आद्यारंभः प्रयोजनं येषां ते प्राथमकल्पिकाः । एकः समानो

अनूचानः प्रवचने सांगेऽधीती गुरोस्तु यः ॥ लब्धानुज्ञः समावृत्तः सुत्वा त्वभिषवे कृते ॥ १० ॥ छात्रांतेवासिनौ शिष्ये शैक्षाः प्राथमकल्पिकाः ॥ एकब्रह्मव्रताचारा मिथः सब्रह्मचारिणः ॥ ११ ॥ सतीर्थ्यास्त्वेकगुरवश्चितवानग्निमग्निचित् ॥ पारंपर्योपदेशे स्यादैतिह्यमितिहाव्ययं ॥ १२ ॥

ब्रह्मव्रताचारो वेदव्रताचरणं येषां ते । एकशाखास्वाध्यायिनो ब्रह्मचारिणस्ते मिथः परस्परं सब्रह्मचारिण इत्युच्यंते । चरणे ब्रह्मचारिणीति समानस्य सभावः । एकं ॥ ११ ॥ एकः समानो गुरुर्येषां ते परस्परं सतीर्थ्याः स्युः । समानतीर्थे वासीति यत्प्रत्ययः । तीर्थे ये इति समानस्य सः । एकं । योऽग्निं चितवान् सोऽग्निचित् । एकं । कृताग्निचयनस्य । ऐतिह्यं । इतिह द्वयं पारंपर्येण लोकपरंपरयाय उपदेशस्तस्मिन् । इतिहेत्यव्ययं ॥ १२ ॥

यत्प्रथमं ज्ञानं सा उपज्ञा स्यात् । यथा ग्रंथस्य पाणिनेरुपज्ञा । एकं । ज्ञात्वा य आरंभः स उपक्रमः । यथा ग्रंथस्योपक्रमः । ज्ञानपूर्वक आरंभ इत्यर्थः । एकं । यज्ञः । सवः । अध्वरः । यागः । सप्ततंतुः । मखः । क्रतुः । सप्त यज्ञस्य ॥ १३ ॥ पाठादयः पंच ब्रह्मयज्ञादिनामका महायज्ञाः स्युः । एकं । तत्र पाठो विधिना वेदादेः पठनं स ब्रह्मयज्ञः । होमो वैश्वदेवहोमः स देवयज्ञः । अतिथीनां गृहागतानां सपर्या अन्नादिना तोषणं स मनुष्ययज्ञः । तर्पणं पितॄणामन्नोदकादिना तृप्तिसंपादनं स पितृयज्ञः । बलिः बलिहरणं स भूतयज्ञः । "पठनं पाठः भावे घञ् । मनुः । अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणं । होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनमिति ।" ॥ १४ ॥ समज्या । परिषत् । गोष्ठी । सभा । समितिः । संसत् । आस्थानी । आस्थानं । सदः । नव सभायाः । परिषदौ । गोष्ठ्यौ । संसदौ । आस्थान्यौ । सदः सांतं क्लीबे । स्त्रीत्वे तु सदाः । "समजंति गच्छंत्यस्यां समज्या । गावो नेका वाचस्तिष्ठंत्यस्यां गोष्ठी । सह समाना वा भांत्यस्यां सभा । संयंति गच्छंत्यस्यां समितिः । संसीदंत्यस्यां संसत् । आतिष्ठंत्यस्यामास्थानी । सीदंत्यस्यां सदः ।" ॥ १५ ॥

उपज्ञा ज्ञानमाद्यं स्याज्ज्ञात्वारंभ उपक्रमः ॥ यज्ञः सवोऽध्वरो यागः सप्ततंतुर्मखः क्रतुः ॥ १३ ॥ पाठो होमश्चातिथीनां सपर्या तर्पणं बलिः ॥ एते पंच महायज्ञा ब्रह्मयज्ञादिनामकाः ॥ १४ ॥ समज्या परिषद्गोष्ठी सभासमितिसंसदः ॥ आस्थानी क्लीबमास्थानं स्त्रीनपुंसकयोः सदः ॥ १५ ॥

हविर्गेहात्प्राक्पूर्वदेशेसदस्यादीनांयद्गृहंसप्राग्वंशइत्येकं। यज्ञशालायाः पूर्वपश्चिमस्तंभयोरर्पितंदीर्घकाष्ठंप्राग्वंशइतिकेचित्। यज्ञकर्मणिविधिंवेदोक्तक्रियाकलापंयेपश्यंतितेसदस्याः। "ऋत्विग्विशेषाइत्यर्थः।" एकं। सभासदः। सभास्ताराः। सभ्याः। सामाजिकाः। चत्वारिसभ्येषु। "सभांस्तृणंतिसभास्ताराः। स्तृञ् आच्छादने। सभायांसाधवः सभ्याः। समाजंरक्षंतिसामाजिकाः ॥ १६ ॥ यजुर्विदृत्विगध्वर्युः। एकं। सामविदुद्गाता। एकं। ऋग्वेदवित्होता। एकं। धनैर्वार्याः यजमानेनधनादिदत्वावरणीयायेआग्नीध्राद्यास्तेऋत्विजः। याजकाः। द्वे "आग्नीध्रआद्योयेषां आद्यशब्दाद्ब्रह्मोद्गातृहोत्रध्वर्य्वादयः षोडश। ऋतौयजंतितेऋत्विजः। कात्यस्तु वृताःकुर्वंतियेयज्ञमृत्विजोयाजकाश्चतइति ॥ १७॥ परिष्कृतायज्ञार्थंसाधिताडमरुकाकाराभूमिर्वेदिरित्युच्यते। एकं। वेदीत्यपि। स्थंडिलं। चत्वरं। द्वे यज्ञार्थंसंस्कृतस्यभूभागस्य। यूपकटकः। यूपस्यशिरसिवलयाकारः काष्ठविकारश्चषालःस्यात्। एकं। यागभूमावंत्यजादिदर्शनवारणायसुगहनावृतिर्वेष्टनंकुंबास्यात्। "एकंस्त्रियां" ॥ १८ ॥

प्राग्वंशःप्राक्हविर्गेहात्सदस्याविधिदर्शिनः॥ सभासदःसभास्ताराःसभ्याःसामाजिकाश्चते॥ १६॥
अध्वर्यूद्गातृहोतारोयजुःसामर्ग्विदःक्रमात्॥ आग्नीध्राद्याधनैर्वार्याऋत्विजोयाजकाश्चते॥ १७॥
वेदिःपरिष्कृताभूमिःसमेस्थंडिलचत्वरे॥ चषालोयूपकटकःकुंबासुगहनावृतिः॥ १८॥

यूपाग्रं। तर्म। द्वे यूपाग्रे। तर्मणी। निर्मंथ्यदारुणिअग्निसिद्ध्यथ निर्मंथनीयेकाष्ठे अरणिरित्येकंस्त्रीपुंसयोः। "अरणीतिस्त्रियां।" दक्षिणाग्निः। गार्हपत्यः। आहवनीयः। एतेत्रयोऽग्नयःअग्निविशेषाःस्युः। एकैकं। "क्वचित्तुत्रयाणांद्वंद्वःपठ्यते।"॥ १९॥ इदमग्नित्रयंत्रेतास्यात्। एकं। "त्रित्वंइता" त्रेतास्त्री। त्रेते। मंत्रादिनासंस्कृतोऽग्निःप्रणीतइत्येकं। समूह्यः। परिचाय्यः। उपचाय्यः। एतेत्रयः अग्नौप्रयोगोस्तियेषांतेअग्निधारणार्थेस्थलविशेषेप्रयुक्ताः ॥२०॥ गार्हपत्यादानीयोद्धृत्ययोदक्षिणाग्निः प्रणीयते प्रवेश्यते तत्रआनाय्यइत्येकं। अग्नायी। स्वाहा। हुतभुक्प्रिया। त्रयमग्नेःप्रियायां। अस्यस्वाहाशब्दस्यनाव्ययत्वं द्रव्यवाचित्वात्। अतएवस्वाहांतुदक्षिणेपार्श्वेइतिप्रयोगःसंगच्छते ॥ २१ ॥

यूपाग्रंतर्मनिर्मंथ्यदारुणित्वरणिर्द्वयोः॥ दक्षिणाग्निर्गार्हपत्याहवनीयौत्रयोऽग्नयः॥ १९॥
अग्नित्रयमिदंत्रेताप्रणीतःसंस्कृतोऽनलः॥ समूह्यःपरिचाय्योपचाय्यावग्नौप्रयोगिणः॥ २०॥
योगार्हपत्यादानीयदक्षिणाग्निःप्रणीयते॥ तस्मिन्नानाय्योऽथाग्नायीस्वाहाचहुतभुक्प्रिया॥ २१॥

अग्निसमिंधनेसमित्प्रक्षेपेणवन्हिज्वलनेयाऋक्प्रयुज्यतेसासामिधेनी धाय्याचस्यात्। द्वे गायत्र्युष्णिगित्यादिछंदःस्यात्। एकंसांतंक्लीब। हव्यपाकेऽग्निमुखेहूयमानेऽन्नेचरुरित्येकं। "हव्यस्यपाकःहव्यपाकः। अनवस्राविर्तातरूष्मपाकओदनश्वरुरितियाज्ञिकाः। चर्यतेभक्ष्यतइतिचरुः। मीमांसकैरपित्रिदच्चर्वधिकरणेऽन्नपरत्वंचरुशब्दस्याभ्युपगतं। विश्वप्रकाशेतु। चरुर्भांडेचहव्यान्नइत्यनेकार्थतोक्ता। अथपुमान्चरुर्हव्यान्नभांडयोरिति मेदिनीच।" ॥ २२ ॥ शृतंपक्कंचतदुष्णंचतस्मिन्क्षीरेदधियोगतोयाविकृतिःसाआमिक्षास्यात्। एकं। मृगचर्मणारचितंयद्व्यजनंतद्धविन्नमित्येकं।

ऋक्सामिधेनीधाय्याचयास्यादग्निसमिंधने॥ गायत्रीप्रमुखंछंदोहव्यपाकेचरुःपुमान्॥ २२॥
आमिक्षासाशृतोष्णेयाक्षीरेस्याद्दधियोगतः॥ धवित्रंव्यजनंतद्यद्रचितंमृगचर्मणा॥ २३॥
पृषदाज्यंसदध्याज्येपरमान्नंतुपायसं॥ हव्यकव्येदैवपित्र्येअन्नेपात्रंस्रुवादिकं॥ २४॥

"धुवित्रमित्यपि" ॥ २३ ॥ दधियुक्तेघृतेपृषदाज्यमित्येकं। "पृषातकं। पृषातकंसदध्याज्येपृषदाज्यंतदुच्यतइतिहेमचंद्रः।" परमान्नं। पायसं। द्वे क्षीरान्नस्य। दैवपित्र्येदेवपितृसंबंधिनिअन्नेक्रमेणहव्यकव्येस्यातां। "हूयंतेप्रीण्यंतेदेवायेनहव्यं। कूयतेपितृभ्यःकव्यं। कुशब्दे।" देवेभ्योदीयमानमन्नंहव्यं। पितृभ्योदीयमानमन्नंकव्यमित्यर्थः। "पैत्रमित्यपि। तस्येदमित्यण्।" एकैकं। स्रुवचमसादिकंपात्रंस्यात्। एकं ॥ २४ ॥

ध्रुवा। उपभृत्। जुहूः। एतेत्रयःस्रुचोभेदाः। स्त्रियः। स्रुवः एकंपुंसि। "अत्रयथास्रुवशब्दस्यरूपभेदात्पुंस्त्वेसिद्धेनेतिपुंस्त्वविधिस्तथापूर्वत्रस्त्रियइतिस्त्रीत्वविधिरपिबोध्यः। स्रुवाद्वयोर्होमपात्रेशल्लकीमूर्वयोस्त्रियामितिमेदिनीकोशेस्त्रीलिंगोपिदृश्यते।" क्रतौयः पशुरभिमंत्र्यहतः असौउपाकृतः स्यात्। एकं। "उपाक्रियतेहिंस्यतइत्युपाकृतः।" ॥ २५॥ परंपराकं। शमनं। "शसनं ससनंचेत्यपि" प्रोक्षणं। त्रयंवधार्थकं। यज्ञियपशुहनन

ध्रुवोपभृज्जुहूर्नातुस्रुवोभेदाःस्रुचःस्त्रियः॥ उपाकृतःपशुरसौयोऽभिमंत्र्यक्रतौहतः॥ २५॥
परंपराकंशमनंप्रोक्षणंचवधार्थकं॥ वाच्यलिंगाःप्रमीतोपसंपन्नप्रोक्षिताहते॥ २६॥
सान्नाय्यंहविरग्नौतुहुतंत्रिषुवषट्कृतं॥ दीक्षांतोऽवभृथोयज्ञेतत्कर्मार्हंतुयज्ञियं॥ २७॥

वाचीत्यर्थः। प्रमीतः। उपसंपन्नः। प्रोक्षितः। त्रीणियागार्थहतेपशुमात्रेवाच्यलिंगानि ॥ २६ ॥ हविर्विशेषः। सान्नाय्यंस्यात्। एकं। अग्नौहुतं याज्यादि वषट्कृतंस्यात्। तत्त्रिषुवाच्यलिंगं। एकं। "वषडितिमंत्रोपलक्षणं। वषणमंत्रेणकृतंप्रक्षिप्तं।" यज्ञेदीक्षांतःदीक्षायाःसमापकः इष्टिपूर्वक स्नानविशेषः अवभृथः। एकं। तत्कर्मार्हंयज्ञकर्मयोग्यंवस्तु "द्विजद्रव्यादि।" यज्ञियं। एकंत्रिषु ॥ २७ ॥

यत्क्रतुकर्मतदिष्टंस्यात् । "क्रतुर्यज्ञः । कर्मदानं । एकाग्निकर्मवहनंत्रेतायांयच्चहूयते । अंतर्वेद्यांचयद्दानमिष्टंतदभिधीयतइतिमनुः ।" एकं । खातं वापीकूपादि आदिनादेवालयादियत्कर्मतत्पूर्तंस्यात् । एकं । "पुष्करिण्यःसभावाप्योदेवतायतनानिच । आरामश्चविशेषेणपूर्तंकर्मविनिर्दिशेदिति स्मृतिः ।" यज्ञशेषेपुरोडाशादौअमृतमित्येकं । भोजनशेषेदेवपित्रादिभुक्तशेषेविघसइत्येकं । यन्मनुः । विघसाशीभवेन्नित्यंनित्यंचामृतभोजनः ।

त्रिष्वथक्रतुकर्मेष्टंपूर्तंखातादिकर्मयत् ॥ अमृतंविघसोयज्ञशेषभोजनशेषयोः ॥ २८ ॥
त्यागोविहापितंदानमुत्सर्जनविसर्जने ॥ विश्राणनंवितरणंस्पर्शनंप्रतिपादनं ॥ २९ ॥
प्रादेशनंनिर्वपणमपवर्जनमंहतिः ॥ मृतार्थंतदहेदानंत्रिषुस्यादौर्ध्वदेहिकं ॥ ३० ॥

विघसोभुक्तशेषःस्यादग्निशेषमथामृतमिति ॥ २८ ॥ त्यागः । विहापितं । दानं । उत्सर्जनं । विसर्जनं । विश्राणनं । वितरणं । स्पर्शनं । प्रतिपादनं ॥ २९ ॥ प्रादेशनं । निर्वपणं । अपवर्जनं । अंहतिः । त्रयोदशदानस्य । तत्रअंहतिःस्त्री । मृतार्थंमृताय तदहे दानंमरणदिनमारभ्यदशाहपर्यंतंपिंडादिदानंऔर्ध्वदेहिकंस्यात् । "और्ध्वदैहिकमित्युभयपदवृद्धिरपि ।" तत्त्रिषु । स्त्रियांतुऔर्ध्वदेहिकी । क्रिया । "तदहर्दानमित्यपिपाठः ।" ॥ ३० ॥



पितृदानं । निवापः । द्वे पितॄनुद्दिश्ययद्दानंक्रियतेतत्त्रशाश्वतः तत्कर्मपितृसंबंधिकर्मश्राद्धंस्यात् । श्रद्धाऽस्तियत्रतच्छ्राद्धं । प्रज्ञाश्रद्धेतिणः । मासिकेऽमावास्याश्राद्धेऽन्वाहार्यमित्येकं । अन्होऽष्टमोंशःकुतपःस्यात् । अंशशब्दोत्रमुहूर्तपरः । मुहूर्तात्सप्तमादूर्ध्वंमुहूर्तान्नवमादधः सकालःकुतपोज्ञेयइत्युक्तेः । दिवसस्याष्टमेभागेमंदीभवतिभास्करे । सकालःकुतपोज्ञेयइतिशातातपः । "क्लीबेतुकुतपं । शब्दरत्नावल्यांतु कुतुपइतिद्युकारोपि ।" ॥ ३१ ॥ पर्येषणा । परीष्टिः । श्राद्धेद्विजभक्तिशुश्रूषायाः । अन्वेषणा । गवेषणा । द्वे धर्मादिमार्गणस्य । "चतुष्कमपि धर्मान्वेषणस्येत्यपिमतं ।" सनिः । अ

पितृदानंनिवापःस्याच्छ्राद्धंतत्कर्मशास्त्रतः ॥ अन्वाहार्यंमासिकेंशोऽष्टमोऽन्हःकुतपोऽस्त्रियां ॥ ३१ ॥
पर्येषणापरीष्टिश्चाऽन्वेषणाचगवेषणा ॥ सनिस्त्वध्येषणायाच्ञाऽभिशस्तिर्याचनाऽर्थना ॥ ३२ ॥
षट्तुत्रिष्वर्घ्यमर्घार्थेपाद्यंपादायवारिणि ॥ क्रमादातिथ्यातिथेयेअतिथ्यर्थेऽत्रसाधुनि ॥ ३३ ॥

ध्येषणा । द्वे यत्गुर्वादेःक्वचिदर्थेप्रार्थनयानियोजनंतत्र । याच्ञा । अभिशस्तिः । "अभिषस्तिः ।" याचना । अर्थना । चत्वारियाचनायाः । याच्ञेत्यत्रचकारञकारसंयोगः ॥ ३२ ॥ षडिति अर्घ्यपाद्यातिथ्यातिथेयावेशिकागंतवइतिषट्शब्दावाच्यलिंगाइत्यर्थः । अर्घःपूजोपचारस्तदर्थेवारिणिजले अर्घ्यमित्येकं । पादायपादार्थेवारिणिपाद्यं । एकं । अतिथ्यर्थे आतिथ्यमित्येकं । अत्रातिथौयत्साधुतत्रआतिथेयमित्येकं ॥ ३३ ॥

आवेशिकः। आगंतुः। अतिथिः। गृहागतः। चत्वारिगृहागतस्य। नापुमान्। "त्रिकांडशेषेतुप्राघुणस्त्वतिथिर्द्वयोरित्युक्तं। स्त्रियांतुअतिथी।" दूराच्चोपगतंश्रांतंवैश्वदेवउपस्थितं। अतिथिंतंविजानीयान्नातिथिःपूर्वमागतइतिव्यासः। प्राघूर्णिकः। प्राघुणकः। द्वे अभ्यागतस्य। तिथिःपर्वोत्सवाः सर्वेत्यक्तायेनमहात्मना। सोऽतिथिःसर्वभूतानांशेषानभ्यागतान्विदुरितियमः। अभ्युत्थानं। गौरवं। द्वे उत्थानपूर्वकसत्कारस्य ॥ ३४॥ पूजा। नमस्या। अपचितिः। सपर्या। अर्चा। अर्हणा। षट्पूजायाः। वरिवस्या। शुश्रूषा। परिचर्या। उपासना। "उपासनमित्यपि। उपासनंशराभ्यासे

स्युरावेशिकआगंतुरतिथिर्नागृहागते॥ प्राघूर्णिकःप्राघुणकश्चाभ्युत्थानंतुगौरवं॥ ३४॥ पूजानमस्याऽपचितिः
सपर्यार्चार्हणाःसमाः॥ वरिवस्यातुशुश्रूषापरिचर्याप्युपासनं॥ ३५॥ व्रज्याऽटाऽट्यापर्यटनंचर्यात्वीर्यापथेस्थि
तिः॥ उपस्पर्शस्त्वाचमनमथमौनमभाषणं॥ ३६॥

प्युपास्त्यावासनेपिचेतिविश्वमेदिन्यौ।" चतुष्कमुपासनस्य। तत्रशुश्रूषाशब्दोगुरुसेवायांलाक्षणिकः। "परिचर्यातूपसर्यैतिभागुरिः।" ३५॥ व्रज्या अटा। अट्या। पर्यटनं। चत्वारिपर्यटनस्य। अटापर्यटनंभ्रमइतिरत्नकोशः। अट्येत्यत्रमूर्धन्यतालव्यसंयोगः। वृथाट्याखलुसातस्येतिप्रयोगः। ईर्यापथेध्यानमौनादिकेयोगमार्गेस्थितिश्चर्यास्यात्। एकं। चर्यात्वीर्याविदुर्बुधाइतियंथांतरे। उपस्पर्शः। आचमनं। द्वे "उपस्पर्शःस्पर्शमात्रेस्नानाचमनयोरपीतिमेदिनी।" मौनं। अभाषणं। द्वे॥ ३६॥



प्राचेतसइत्यादिसार्धश्लोकःक्वचिदस्ति। तत्र प्राचेतसादिचतुष्कंवाल्मीकस्य। मैत्रावरुणइत्यपि। वाल्मीकिः। "वल्मिकिरितिद्विरूपकोशे। वल्मीकः। अपिवाल्मीकवल्मीकाविितित्रिकांडशेषः। वल्मिकइतिशब्दरत्नावल्यां।" गाधेयादित्रयंविश्वामित्रस्य। "तत्रकौषिकइत्यपि" ॥ १॥ व्यासादिचतुष्कंव्यासस्य॥ आनुपूर्वी। आवृत्। परिपाटिः। "परिपाटीतिङीषंतापि" अनुक्रमः। पर्यायः। पंचकमनुक्रमस्य। आनुपूर्व्यमि

प्राचेतसश्चादिकविःस्यान्मैत्रावरुणिश्चसः॥ वाल्मीकिश्चाथगाधेयोविश्वामित्रश्चकौशिकः॥ १॥
व्यासोद्वैपायनःपाराशर्यःसत्यवतीसुतः॥ आनुपूर्वीस्त्रियांवावृत्परिपाटीअनुक्रमः॥ पर्यायश्चाति
पातस्तुस्यात्पर्ययउपात्ययः॥ ३७॥ नियमोव्रतमस्त्रीतच्चोपवासादिपुण्यकं॥

तिपाठोवा। "आनुपूर्वमितिच। स्त्रियांवेतिपक्षेक्लीबता।" आवृतःपरिपाटेश्चस्त्रीत्वं। "परिपाटीअनुक्रमइत्यत्रद्विवचनत्वान्नयण्।" अतिपातः। पर्ययः। उपात्ययः। त्रीण्यतिक्रमस्य॥ ३७॥ नियमः। व्रतं। द्वे व्रतमात्रस्य। तच्चव्रतं उपवासचांद्रायणादियत्पुण्यकं तज्ज्ञेयं। "अथवाउपवासआदिर्यस्यकृच्छ्रचांद्रायणप्राजापत्यनक्तभोजनादेस्तदुपवासादिव्रतंपुण्यकमित्येकमिति।"

औपवस्तं । "उपवस्तमित्यपि । क्वचिदौपवस्त्रमितिपाठः । तत्रतृचूप्रत्ययांतादुपवस्तुरिदंकर्मेत्यर्थे तस्येदमित्यण् । उपोषणं । उपोषितमित्यपि । भावेक्तः ।" उपवासः । द्वे उपवासस्य । माषान्मधुमसूरांश्चवर्जयेदौपवस्तकइतिप्रयोगः । पृथगात्मतापृथक्स्वरूपत्वं विवेकःस्यात् । एकं । यथाचिज्जडयोर्विवेकइति ॥ ३८ ॥ वृत्तंसदाचारपालनंअध्ययनंवेदाभ्यासः तयोर्ऋद्धिःसंपत्तिः ब्रह्मवर्चसं । एकं । ब्रह्मणः तपःस्वाध्यायादेर्वर्चस्तेजोब्रह्मवर्चसमितिस्वामी । पाठेवेदपठनेयोंजलिः सब्रह्मांजलिः । अध्ययनस्यादौहस्तयोर्हिप्रणवोच्चारपूर्वकमंजलिःक्रियते एकं । वेदपाठेविप्रुषोमुखात्

औपवस्तंतूपवासोविवेकःपृथगात्मता ॥ ३८ ॥ स्याद्ब्रह्मवर्चसंवृत्ताध्ययनर्द्धिरथांजलिः ॥
पाठेब्रह्मांजलिःपाठेविप्रुषोब्रह्मबिंदवः ॥ ३९ ॥ ध्यानयोगासनेब्रह्मासनंकल्पेविधिक्रमौ ॥
मुख्यःस्यात्प्रथमःकल्पोऽनुकल्पस्तुततोऽधमः ॥ ४० ॥

निर्गतजलकणाब्रह्मबिंदवःस्युः । "विप्लुषइत्यपिपाठः ।" एकं ॥ ३९ ॥ ध्यानयोगयोरासनेब्रह्मासनमित्येकं । एकतानेनमनसास्मरणंध्यानमुच्यते । चित्तवृत्तिनिरोधस्तुसद्भिर्योगइतिस्मृतः । कल्पः । विधिः । क्रमः । त्रयंनियोगशास्त्रस्य । यःप्रथमः कल्पः आद्योविधिः समुख्यःस्यात् । यथाव्रीहिभिर्यजेत । ततोमुख्यादधमोगौणः अनुकल्पःस्यात् । यथाव्रीह्यभावेनीवारैर्यजेत ॥ ४० ॥



संस्कारपूर्वकंश्रुतेर्ग्रहणं उपाकरणंस्यात् । एकं । उपाकर्मणि "संस्कारउपनयनं ।" पादग्रहणं । अभिवादनं । द्वे नामगोत्रोक्तिपूर्वकस्यनमस्कारविशेषस्य ॥ ४१ ॥ भिक्षुः । परिव्राट् । कर्मंदी । पाराशरी । मस्करी । पंच संन्यासिनः । परिव्राजौ "कर्मंदेनप्रोक्तंभिक्षुसूत्रमधीतेकर्मंदी । पाराशर्येणप्रोक्तंभिक्षुसूत्रमधीतेपाराशरी । मस्करोज्ञानंवेणुर्वास्यास्तिमस्करी ।" तपस्वी । तापसः । पारिकांक्षी । त्रयंतपोयुक्तस्य । 'पारि ब्रह्मज्ञानं कांक्षति

संस्कारपूर्वंग्रहणंस्यादुपाकरणंश्रुतेः ॥ समेतुपादग्रहणमभिवादनमित्युभे ॥ ४१ ॥
भिक्षुःपरिव्राट्कर्मंदीपाराशर्यपिमस्करी ॥ तपस्वीतापसःपारिकांक्षीवाचंयमोमुनिः ॥ ४२ ॥
तपःक्लेशसहोदांतोवर्णिनोब्रह्मचारिणः ॥ ऋषयःसत्यवचसःस्नातकस्त्वाप्लुतोव्रती ॥ ४३ ॥

पारिकांक्षी ।" वाचंयमः । मुनिः । द्वे वाग्यतस्य ॥ ४२ ॥ तपसः क्लेशोऽनुद्विग्नोदांतःस्यात् । एकं । वर्णी । ब्रह्मचारी । द्वे ब्रह्मचारिणः । ऋषिः । सत्यवचाः । द्वे ऋषिसामान्यस्य । तद्भेदास्तुमहर्षिदेवर्षिब्रह्मर्षिप्रभृतयः योव्रतीवेदव्रतवान् । आप्लुतःस्नातः कृतसमावर्तनइतियावत्सःस्नातकइत्युच्यते । "आप्लवव्रतीतिपाठोवा ।" यदाहुः । गुरवेतुवरंदत्वास्नायाद्वातदनुज्ञया । वेदव्रतानिवापारंनीत्वाह्युभयमेववेति ॥ ४३ ॥

निर्जितःस्ववशस्थइंद्रियसमूहोयैस्तेयतिनः। यतयः। द्वे। योनियमवशात्भूमिविशेषेशेतेअसौस्थंडिलशायी ॥ ४४ ॥ स्थांडिलः। द्वे विरजस्तमाः द्वयातिगः। द्वे सत्वैकनिष्ठेषुव्यासादिषु। "रजस्तमोभ्यांविगतः विरजस्तमाः।" पवित्रः। प्रयतः। पूतः। त्रयंपवित्रस्य। पाखंडः। सर्वलिंगी। द्वे बौद्धक्षपणकादिषुदुःशास्त्रवर्तिषु। "तत्रपाखंडः कवर्गद्वितीयमध्यः। पालनाच्चत्रयीधर्मःपाशब्देननिगद्यते। तंखंडयंतितेतस्मात्पाखंडास्तेनहेतुने

येनिर्जितेंद्रियग्रामायतिनोयतयश्चते॥ यःस्थंडिलेव्रतवशाच्छेतेस्थंडिलशाय्यसौ॥ ४४ ॥ स्थांडिलश्चाथविरजस्तमसःस्युर्द्वयातिगाः॥ पवित्रःप्रयतःपूतःपाखंडाःसर्वलिंगिनः॥ ४५ ॥ पालाशोदंडआषाढोव्रतेरांभस्तुवैणवः॥ अस्त्रीकमंडलुःकुंडीव्रतिनांसासनंवृषी॥४६॥ अजिनंचर्मकृत्तिःस्त्रीभैक्षंभिक्षाकदंबकं॥ स्वाध्यायःस्याज्जपःसुत्याऽभिषवःसवनंचसा॥ ४७॥

ति" ॥४५॥ व्रतेब्रह्मचारिणःपलाशसंबंधीदंडआषाढइत्युच्यते। एकं। वेणुसंबंधीदंडोरांभइत्येकं। कमंडलुः। कुंडी। द्वे व्रतिनांजलपात्रस्य। "क्लीबेकमंडलु। कुंडीस्त्रियां। जानपदेतिङीष्।" कुंड्यौ। व्रतिनांयदासनंसावृषी। एकं। वृसीतिपाठांतरं ॥ ४६ ॥ अजिनं। चर्म। कृत्तिः। त्रीणिमृगादेश्चर्मणि। भिक्षाणांसमूहोभैक्षं। स्वाध्यायः। जपः। द्वे वेदाभ्यासस्य। "सुअतीवावृत्त्यास्वार्थंवाध्ययनंस्वाध्यायः।" सुत्या। अभिषवः। सवनं। त्रीणिसोमाभिषवस्य। तत्रसुत्याटाबंता। सुवंतिसोममस्यांसुत्या। संज्ञायांसमजेतिक्यप् ॥ ४७ ॥

सर्वैनसांसर्वपापानांनाशकंजप्यंऋगादिअघमर्षणंस्यात्। एकं। स्त्रियांत्वघमर्षणी। पक्षांतयोरमावास्यायांपौर्णमास्यांचविहितौयागौक्रमेणदर्शःपौर्णमासश्चस्यातां। एकैकं ॥ ४८ ॥ शरीरसाधनापेक्षंशरीरमात्रेणसाध्यं नित्यंयत्कर्मतद्यमः। आहच। अहिंसासत्यमस्तेयंब्रह्मचर्यपरिग्रहौयमाइति। एकं। यत्कर्मआगंतुसाधनं आगंतुबाह्यंसाधनंयत्रतत्। मृज्जलादिनासाध्यमित्यर्थः। नित्यंकृत्रिमंयत्कर्मसनियमः। यदाह। शौचसंतोषतपः

सर्वैनसामपध्वंसिजप्यंत्रिष्वघमर्षणं॥ दर्शश्चपौर्णमासश्चयागौपक्षांतयोःपृथक्॥ ४८॥ शरीरसाधनापेक्षंनित्यंयत्कर्मतद्यमः॥ नियमस्तुसयत्कर्मनित्यमागंतुसाधनं॥ ४९॥ "क्षौरंतुभद्राकरणंमुंडनंवपनंत्रिषु॥" उपवीतंब्रह्मसूत्रंप्रोद्धृतेदक्षिणेकरे॥ प्राचीनावीतमन्यस्मिन्निवीतंकंठलंबितं॥ ५०॥

स्वाध्यायेश्वरप्रणिधानानियमाइति। एकं। क्वचित्पुस्तकेक्षौरंतुइत्यादिदृश्यतेतदत्रत्यंनेत्युपेक्षितं। क्षौरादिचतुष्कंमुंडनस्येत्युपेक्षितसंग्रहः।" ॥ ४९ ॥ दक्षिणेकरेप्रोद्धृतेसतियद्ब्रह्मसूत्रंतदुपवीतंस्यात्। एकं। अन्यस्मिन्वामेकरेप्रोद्धृतेप्राचीनावीतंस्यात्। एकं। कंठेलंबितंऋजुभावेनविन्यस्तंतत्ब्रह्मसूत्रंनिवीतमित्येकं ॥ ५० ॥

अगुलीनामग्रेदैवंतीर्थंज्ञेयं । अतोदेवतीर्थेनतर्पयेदित्यत्रांगुल्यग्रेणेतिबोध्यं । स्वल्पांगुल्योरनामिकायाः कनिष्ठिकायाश्चमूलेकायं । कःप्रजापतिर्देवताऽस्यकायं । प्राजापत्यमित्यर्थः । अंगुष्ठतर्जन्योर्मध्यभागेपित्र्यं । "पैत्र्यमित्यपि" अंगुष्ठस्यमूलेतुब्राह्मंतीर्थं । यद्याज्ञवल्क्यः । कनिष्ठातर्जन्यंगुष्ठमूलान्यग्रंकरस्यच । प्रजापतिपितृब्रह्मदेवतीर्थान्यनुक्रमात् । एकैकं ॥ ५१ ॥ ब्रह्मभूयादित्रयं ब्रह्मभावस्य । "ब्रह्मणोभावःब्रह्मभूयं ।" तद्वत्

अंगुल्यग्रेतीर्थंदैवंस्वल्पांगुल्योर्मूलेकायं ॥ मध्येंगुष्ठांगुल्योःपित्र्यंमूलेत्वंगुष्ठस्यब्राह्मं ॥ ५१ ॥
स्याद्ब्रह्मभूयंब्रह्मत्वंब्रह्मसायुज्यमित्यपि ॥ देवभूयादिकंतद्वत्कृच्छ्रंसांतपनादिकं ॥ ५२ ॥
संन्यासवत्यनशनेपुमान्प्रायोऽथवीरहा ॥ नष्टाग्निःकुहनालोभान्मिथ्येर्यापथकल्पना ॥ ५३ ॥

देवभूयंदेवत्वंदेवसायुज्यमितित्रयंदेवभावस्य । सांतपनादिकंकृच्छ्रंस्यात् । एकं । तदुक्तं । गोमूत्रंगोमयंक्षीरंदधिसर्पिःकुशोदकं । एकरात्रोपवासश्च कृच्छ्रंसांतपनंस्मृतमिति । आदिनाप्राजापत्यादिग्रहः ॥ ५२ ॥ संन्यासपूर्वकेभोजनत्यागेप्रायइत्येकं । अदंतःपुंसि । वीरहा । नष्टाग्निः । द्वे नष्टाग्निर्यस्यतस्य । "वीरोऽग्निस्तंहंतीतिविरहा ।" वीरहणौ । लोभात्परधनाद्यभिलाषात्या मिथ्येर्यापथकल्पना दंभेनध्यानादिसंपादनंसाकुहनेत्येकं ॥ ५३ ॥



संस्कारेणोपनयनेनगौणकालोत्तरंहीनोव्रात्यइत्यर्थः । एकं । अस्वाध्यायः स्वशाखाध्ययनशून्योनिराकृतिः । एकं । आकृतेरध्ययनचेष्टायानिर्गतोनिराकृतिः ।" धर्मध्वजी । लिंगवृत्तिः । द्वे जीविकार्थंजटादिधारणवतः । लिंगंधर्मचिन्हंवृत्तिर्जीविकायस्यसः । अवकीर्णी । क्षतव्रतः । द्वे नष्टब्रह्मचर्यस्य । "अवकीर्णंविक्षिप्तंव्रतमनेनावकीर्णी ।" अवकीर्णिनौ ॥ ५४ ॥ अंशुमान्रविर्यस्मिन्सुप्तेऽस्तमेतिसोऽभिनिर्मुक्तः । एकं । "अभिसर्वतः सायंतनंकर्म निश्चयेनमुक्तंयेन ।" यस्मिन्सुप्तेंऽशुमानुदेतिसोऽभ्युदितः । "अभिसर्वतःउदतिशयेनइतंगतंप्रातस्तनंकर्मास्य ।" ॥ ५५ ॥ ज्येष्ठेभ्रातर्यकृतदारपरिग्रहेसतिकृतदारपरिग्रहः कनिष्ठः परिवेत्तास्यात् । एकं । तस्यपरिवेत्तुर्ज्यायान् ज्येष्ठःपरिवित्तिःस्यात् । एकं । विवाहः । उपयमः ॥ ५६ ॥ परिणयः । उद्वाहः । उपयामः । पाणिपीडनं । षट्विवाहस्य । व्यवायः । ग्राम्यधर्मः । मैथुनं । निधुवनं । रतं । पंच मैथुनस्य । "नितरांधुवनंहस्तपादादिचालनमत्रनिधुवनं ।" ॥ ५७ ॥

व्रात्यःसंस्कारहीनःस्यादस्वाध्यायोनिराकृतिः ॥ धर्मध्वजीलिंगवृत्तिरवकीर्णीक्षतव्रतः ॥ ५४ ॥ सुप्तेयस्मिन्नस्तमेतिसुप्तेयस्मिन्नुदेतिच ॥ अंशुमानभिनिर्मुक्ताभ्युदितौचयथाक्रमं ॥ ५५ ॥ परिवेत्तानुजोऽनूढेज्येष्ठेदारपरिग्रहात् ॥ परिवित्तिस्तुतज्ज्यायान्विवाहोपयमौसमौ ॥ ५६ ॥ तथापरिणयोद्वाहोपयामाःपाणिपीडनं ॥ व्यवायोग्राम्यधर्मोमैथुनंविधुवनंरतं ॥ ५७ ॥

धर्मोवेदविहितोयागादिः । कामोयथाविधिस्त्रीसेवनं । अर्थोधनं । एभिस्त्रिभिः समुदितस्त्रिवर्गः । एकं । समोक्षकैः । धर्मार्थकाममोक्षैरित्यर्थः । एतैःसमुदितश्चतुर्वर्गइत्येकं । तैर्धर्मादिभिःसबलैश्चतुर्भद्रमित्येकं । "चत्वारिभद्राणिश्रेष्ठानिअत्र ।"वरस्यजामातुर्येस्निग्धावयस्याजन्याःस्युरित्येकं । इतिब्रह्मवर्गः ॥७॥ मूर्धाभिषिक्तः । राजन्यः । बाहुजः । क्षत्रियः । विराट् । पंच क्षत्रियस्य । विराजौ । राजा । राट् । पार्थिवः । क्ष्माभृत् । "क्ष्माभुक् ।"

त्रिवर्गोधर्मकामार्थैश्चतुर्वर्गःसमोक्षकैः॥सबलैस्तैश्चतुर्भद्रंजन्याःस्निग्धावरस्यये॥५८॥इतिब्रह्मवर्गः॥७॥ मूर्धाभिषिक्तोराजन्योबाहुजःक्षत्रियोविराट्॥राजाराट्पार्थिवक्ष्माभृन्नृपभूपमहीक्षितः॥ १ ॥ राजातुप्रणताशेषसामंतःस्यादधीश्वरः॥ चक्रवर्तीसार्वभौमोनृपोन्योमंडलेश्वरः॥ २ ॥ येनेष्टंराजसूयेनमंडलस्येश्वरश्चयः॥शास्तियश्चाज्ञयाराज्ञःससम्राडथराजकं ॥ ३ ॥

नृपः । भूपः । महीक्षित् । सप्तराज्ञः ।राजानौ । राज्ञौ । क्ष्माभृतौ । महीक्षितौ ॥ १ ॥ प्रणताअशेषसामंताऽखिलदेशांतरनृपायस्यसराजाऽधीश्वरइत्येकं । चक्रवर्ती । सार्वभौमः । द्वे आसमुद्रक्षितीशस्य । तदन्योनृपोमंडलेश्वरइत्येकं ॥ २ ॥ राजसूयाख्यक्रतुविशेषेणयेनेष्टं । द्वादशमंडलस्येश्वरश्चयः । यश्चस्वाज्ञयासर्वभूपानृशास्तिईदृशविशेषणत्रयेणविशिष्टोराजासम्राट्स्यात् । "एकैकविशेषणविशिष्टोपिसम्राट्इतिकेचित् । एकं " ॥ ३ ॥



नृपतीनांगणेराजकमित्येकं । क्षत्रियाणांगणेराजन्यकमित्येकं । मंत्री । धीसचिवः । अमात्यः । त्रयंबुद्धिसहायस्य ।"धीप्रधानःसचिवोधीसचिवः । अमासहसमीपेवाभवः अमात्यः । अव्ययात्त्यप् ।" ततोधीसचिवादन्येकर्मोपयुक्ताःसचिवाः कर्मसचिवाःस्युरित्येकं ॥ ४ ॥ महामात्राः । प्रधानानि । द्वे मुख्यानांराजसहायानां । "प्रधानइत्यपि" । महामात्रःप्रधानःस्यादितिपुंस्कांडेबोपालितात् । महतीमात्रायेषांतेमहामात्राः । मात्राकर्णविभूषायांवित्तेमानेपरिच्छदइतिमेदिनी । पुरोधाः । पुरोहितः द्वे । व्यवहाराणांऋणादिविषयेवादिप्रतिवादिनिर्मितविवादानां द्रष्टरिनिर्णेतरिप्राड्विवा

राजन्यकंचनृपतिक्षत्रियाणांगणेक्रमात्॥ मंत्रीधीसचिवोमात्योन्येकर्मसचिवास्ततः॥ ४ ॥महामात्राःप्रधानानिपुरोधास्तुपुरोहितः॥ द्रष्टरिव्यवहाराणांप्राड्विवाकाक्षदर्शकौ॥ ५॥ प्रतीहारोद्वारपालद्वास्थद्वास्थितदर्शकाः॥

कः । अक्षदर्शकः । इतिद्वे "न्यायाधीशइतिख्यातस्य । प्राट्चविवाकश्चप्राड्विवाकौ प्रश्नविवेकावस्यस्तः प्राड्विवाकः । यदुक्तं । विवादानुगतंस्पृष्ट्वापूर्ववाक्यंप्रयत्नतः । विचारयतियेनासौप्राड्विवाकस्ततःस्मृतइति । अक्षाणांव्यवहाराणांदर्शकः । अक्षःकर्षेतुषेचक्रेशकटव्यवहारयोरिति विश्वः । प्रतीहारः । "प्रतिहारः ।" द्वारपालः । द्वास्थः । द्वास्थितः । दर्शकः । पंच द्वारपालस्य । "द्वाःस्थःद्वाःस्थितइतिसविसर्गोपिपाठः । द्वाःस्थितदर्शकइतिसमस्तमपि ।" प्रतीहारेपिदर्शकइतिरुद्रः । द्वारपोद्वास्थितादर्शीइतिरभसः ॥

रक्षिवर्गः । अनीकस्थः । द्वे राजरक्षकगणस्य । अध्यक्षः । अधिकृतः । द्वे अधिकारीइतिख्यातस्य । "अधिअधिकंउपरिवाक्रियतेऽस्मात्अधिकृतः ।" ६ ॥ एकस्मिन्ग्रामेअधिकृतःस्थायुकःस्यात् । "शेखदारइतिख्यातस्य ।" भूरिषुबहुषुग्रामेष्वधिकृतोगोपइत्येकं । "गोपोगोपालकेगोपाऽध्यक्षेपृथ्वीपतावपि । ग्रामस्याधिकृतेपुंसिशारिवाख्यौषधेस्त्रियामितिमेदिनी ।" भौरिकः । कनकाध्यक्षः । द्वे स्वर्णाध्यक्षस्य । रूप्याध्यक्षः । नै

**रक्षिवर्गस्त्वनीकस्थोऽथाध्यक्षाऽधिकृतौसमौ ॥ ६ ॥ स्थायुकोऽधिकृतोग्रामेगोपोग्रामे
षुभूरिषु ॥ भौरिकःकनकाध्यक्षोरूप्याध्यक्षस्तुनैष्किकः ॥ ७ ॥ अंतःपुरेत्वधिकृतःस्या
दंतर्वंशिकोजनः ॥ सौविदल्लाःकंचुकिनःस्थापत्याःसौविदाश्चते ॥ ८ ॥**

ष्किकः । द्वे रूप्याधिकृतस्य ॥ ७ ॥ अंतःपुरेऽधिकृतोजनः अंतर्वंशिकःस्यात् । एकं । "अंतर्वंशेनियुक्तः अंतर्वंशिकः ।" सौविदल्लाः । कंचुकिनः । स्थापत्याः । सौविदाः । चत्वारि राजसन्निधौ "राज्ञां रूयगारेवा " वेत्रधराः कंचुकिनः पुरुषास्तिष्ठंतितेषां । "सुष्ठुविदंविद्वांसमपिलांतिवशंकुर्वंति सुविदल्लास्तासामिमेरक्षकाः सौविदल्लाः । तिष्ठंत्येषुपुरुषाः तेषांस्थानां दाराणांपतयः पालकाःस्थापत्याः सुविदश्चतुरास्त्रियस्तासांरक्षकाः सौविदाः । तस्येदमित्यण् ।" ॥ ८ ॥



षंढः । "शंढः । शंडः । षंडः ।" वर्षवरः । द्वे अंतःपुरचारिणः क्लीबमात्रस्य । "खोजाइतिख्यातस्य । यदुक्तं । येत्वल्पसत्वाःप्रथमाःक्लीबाश्चस्त्रीस्वभाविनः । जात्यानदुष्टाःकार्येषुतेवैवर्षवराःस्मृताइति"। सेवकः । अर्थी । अनुजीवी । त्रीणिसेवकस्य । विषयात्स्वदेशादनंतरोऽव्यवहितोराजाशत्रुःस्यात् । एकं । अतःशत्रोः परंमित्रं राजांतरेणव्यवहितोराजामित्रंस्यादित्यर्थः । एकं ॥ ९ ॥ परतरःशत्रुमित्राभ्यांपरोराजाउदासीनःस्यात् । अतिव्यवहितउदासीनइत्यर्थः । एकं । पृष्ठतः पश्चाद्देशेवर्तमानो राजापार्ष्णिग्राहः । राज्ञिशत्रुजयार्थंपुरतोगतेयस्तद्राष्ट्रंजिघृक्षति सपृष्ठवर्तीपार्ष्णिग्राहइ

**षंढोवर्षवरस्तुल्यौसेवकार्थ्यनुजीविनः ॥ विषयानंतरोराजाशत्रुर्मित्रमतःपरं ॥ ९ ॥
उदासीनःपरतरःपार्ष्णिग्राहस्तुपृष्ठतः ॥ रिपौवैरिसपत्नारिद्विषद्द्वेषणदुर्हृदः ॥ १० ॥
द्विड्विपक्षाहितामित्रदस्युशात्रवशत्रवः ॥ अभिघातिपरारातिप्रत्यर्थिपरिपंथिनः ॥ ११ ॥**

त्यर्थः । एकं । रिपुः । वैरी । सपत्नः । अरिः । द्विषः । द्वेषणः । दुर्हृदः ॥ १० ॥ द्विट् । विपक्षः । अहितः । अमित्रः । दस्युः । शात्रवः । शत्रुः । अभिघाती । "अभियाती । अभियातिश्चापि । द्वेष्योभियातिरमित्रइतिरत्नकोशः ।" परः । अरातिः । प्रत्यर्थी । परिपंथी । एकोनविंशतिर्नामानिशत्रोः । "सपत्नारिरितिसमस्तमपि ।" द्विषंतौ । दुर्हृदौ । द्विषौ । अभिघातिनौ ॥ ११ ॥

वयस्यः । स्निग्धः । सवयाः । त्रयंतुल्यवयसः प्रियस्य । मित्रं । सखा । सुहृत् । त्रीणिमित्रस्य । सखेदंतः सखायौ । सुहृदौ । सख्यं । साप्तपदीनं । द्वे मैत्र्याः । अनुरोधः । अनुवर्तनं । द्वे आनुकूल्यस्य ॥ १ २ ॥ यथार्हवर्णः । प्रणिधिः । अपसर्पः । चरः । स्पशः । चारः । गूढपुरुषः । सप्तचारपुरुषस्य । यथार्हवर्णआकारोयस्ययथार्हवर्णः । स्पशतेबाधतेपरान्स्पशः । आप्तः । प्रत्ययितः । द्वे विसंवादरहितस्य । प्रत्ययोविश्वासः संजातोऽस्यप्रत्ययितः ॥ १ ३॥

वयस्यःस्निग्धःसवयाअथमित्रंसखासुहृत् ॥ सख्यंसाप्तपदीनंस्यादनुरोधोनुवर्तनं ॥ १ २ ॥ यथार्हवर्णःप्रणिधिरपसर्पश्चरःस्पशः ॥ चारश्चगूढपुरुषश्चाप्तप्रत्ययितौसमौ ॥ १ ३ ॥ सांवत्सरोज्योतिषिकोदैवज्ञगणकावपि ॥ स्युर्मौहूर्तिकमौहूर्तज्ञानिकार्तांतिकाअपि ॥ १ ४ ॥ तांत्रिकोज्ञातसिद्धांतःसत्रीगृहपतिःसमौ ॥ लिपिकरोऽक्षरचणोऽक्षरचंचुश्चलेखके ॥ १ ५॥

सांवत्सरः । ज्योतिषिकः । दैवज्ञः । गणकः । मौहूर्तिकः । मौहूर्तः । ज्ञानी । कार्तांतिकः । अष्टौज्योतिषिकस्य । "जोशीइतिख्यातस्य " ॥ १ ४ ॥ तांत्रिकः । ज्ञातसिद्धांतः । द्वे शास्त्रवेत्तुः । "ज्ञातःसिद्धांतोयेनज्ञातसिद्धांतः ।" सत्री । गृहपतिः । द्वे गृहपतिनः । "सदान्नादिदानकर्त्तुः ।" लिपिकरः । "लिबिकरः । लिपिकारइत्यपि । लिबिंकरइतिभानुदीक्षितटीकायां ।" अक्षरचणः । अक्षरचंचुः । लेखकः । चत्वारिलेखकस्य । अक्षरैर्वित्तोऽक्षरचणः । तेनवित्तश्चंचुप्चणपौ ॥ १ ५ ॥



लिखितं । अक्षरसंस्थानं । लिपिः । "लिपी । "लिबिः । चत्वारिलिखिताऽक्षरस्य । लिखिताक्षरविन्यासइतिपाठेलिखितनामाक्षराणांयोविन्यासस्तत्रेत्यर्थः । संदेशहरः । दूतः । द्वे संदिश्यतइतिसंदेशोनिरूपणंतद्धरतिइतिसंदेशहरः । तस्यदूतस्यभावेकर्मणिचदूत्यमित्येकं । "दौत्यमपि । तद्भागकर्मणीइतित्वपपाठः ।" दूतस्यभागकर्मणीइतियच्छांदसत्वात् ॥ १ ६ ॥ अध्वनीनः । अध्वगः । अध्वन्यः । पांथः । पथिकः । पंचपांथस्य । "स्त्रियांतुपांथा । पथिकी । पथष्कन् । षीत्वात्ङीष् ।" स्वामी । राजा । अमात्योमंत्री । सुहृन्मित्रं । कोशोधनागारं । राष्ट्रंजनपदवर्तिभूमिः । दुर्गंदुर्गमस्थानं । "पर्वतादि ।" बलंसेना ॥ १ ७ ॥ एतानिसप्तराज्यांगानिस्युः । राज्ञः कर्मराज्यं । तस्यांगानिआरंभकाणि । स्वाम्यमात्यश्चराष्ट्रंचदुर्गंकोशोबलंसुहृत् । परस्परोपकारीदंसप्तांगराज्यमुच्यतइतिकामंदकीये । एतान्येवप्रकृतिशब्दवाच्यानिस्युः । द्वे"प्रकृष्टंकुर्वंतिराज्यंप्रकृतयः । पौराणांश्रेणयोपिप्रकृतयःस्युः । "पौरश्रेणिभिःसहाष्टांगमपिराज्यमित्यर्थः ।" यत्कात्यः अमात्यश्चतथापौराःसद्भिःप्रकृतयःस्मृताइति । एकं । शिल्पोपजीविनांपंक्तिरत्रश्रेणिः । मुख्यःसजातीयसमूहःश्रेणिरित्यन्ये ॥

लिखिताऽक्षरसंस्थानेलिपिर्लिबिरुभेस्त्रियौ ॥ स्यात्संदेशहरोदूतोदूत्यंतद्भावकर्मणी ॥ १ ६॥ अध्वनीनोध्वगोध्वन्यःपांथःपथिकइत्यपि ॥ स्वाम्यमात्यसुहृत्कोशराष्ट्रदुर्गबलानिच ॥ १ ७॥ राज्यांगानिप्रकृतयःपौराणांश्रेणयोपिच ॥

संधिः । संधानं । स्वर्णादिनाशत्रूणांप्रीत्युत्पादनमिति । संधिशब्दःपुमान् । परमंडलेदाहलुंठनादिग्रहणंविग्रहः । शत्रुंप्रतिविजिगीषोर्गमनंयानं । शक्तिप्रतिबंधेसतिकालंप्रतीयादितिदुर्गादिकंनिर्मायतत्रावस्थानमासनं । बलिनासहसंधिः । अबलेनसहविग्रहः इतिप्रकारद्वयंद्वैधं अरिणापीड्यमानस्यबलवद्भूपालाद्याश्रयणंआश्रयः । एतेषांभेदास्तुकामंदकीयादौद्रष्टव्याः ॥ १८ ॥ एतेसंध्यादयःषड्गुणाःस्युः । एकं । प्रभावोत्साहमंत्रजास्तिस्रः

संधिर्नाविग्रहोयानमासनंद्वैधमाश्रयः ॥ १८ ॥ षड्गुणाःशक्तयस्तिस्रःप्रभा
वोत्साहमंत्रजाः ॥ क्षयःस्थानंचवृद्धिश्चत्रिवर्गोनीतिवेदिनां ॥ १९ ॥

शक्तयःस्युः । एकं । तत्रकोशदंडजंतेजःप्रभावशक्तिः । विक्रमादिनोन्नतिरुत्साहशक्तिः । संधिविग्रहादीनांमंत्रेणयथावत्स्थापनंमंत्रशक्तिः । पंचांगमंत्रोमंत्रशक्तिरित्यन्ये । क्षयःस्थानंवृद्धिरितित्रयंनीतिवेदिनांत्रिवर्गःस्यात् । नीतिशास्त्रोक्तस्त्रिवर्गइत्यर्थः । एकं । अष्टवर्गस्यापचयःक्षयः । तस्यैवोपचयोवृद्धिः । उपचयापचयराहित्येनावस्थानं स्थानं । अष्टवर्गस्तु । कृषिर्वणिक्पथोदुर्गंसेतुःकुंजरबंधनं । खनिर्बलंकरादानमित्युक्तः ॥ १९ ॥



कोशः अर्थौघः । दंडःदमः । सेनातज्जन्यंतेजः प्रतापःप्रभावश्चस्यात् । द्वे "अधिक्षेपावमानादेःप्रयुक्तस्यपरेणयत् । प्राणात्ययेप्यसहनंयत्तेजःसमुदाहृतमितिभरतः ।" सामप्रियवचनादि । "तदुक्तं । परस्परोपकाराणांदर्शनंगुणकीर्तनं । संबंधस्यसमाख्यानमायत्याःसंप्रकाशनं । वाचापेशलयासाधुतवाहमितिचार्पणं । इतिसामविधानज्ञैःसामपंचविधंस्मृतमिति ।" दानंधनादेःसमर्पणं । भेदःसंहतानांशत्रूणांभेदनेनात्मसात्करणं । दंडनंदंडः । एतच्चतुष्कंउपायचतुष्टयंस्यात् । "अन्यत्रसप्तोपायाअप्युक्ताः । सामदानंचभेदश्चदंडश्चेतिचतुष्टयं । मायोपेक्षेंद्रजालंचसप्तोपायाःप्रकीर्तिताइति ।" भे

सप्रतापःप्रभावश्चयत्तेजःकोशदंडजं ॥ सामदानेभेददंडावित्युपायचतुष्टयं ॥ २० ॥
साहसंतुदमोदंडःसामसांत्वमथोसमौ ॥ भेदोपजापावुपधाधर्माद्यैर्यत्परीक्षणं ॥ २१ ॥

दोदंडःसामदानमितिपाठांतरं ॥ २० ॥ साहसं । दमः । दंडः । त्रीणिदंडस्य । साम । सांत्वं । "द्वे सलूखइतिख्यातस्य ।" भेदः । उपजापः । द्वे संहतयोर्द्वैधीकरणस्य । धर्मार्थकामैर्भयेनचपरीक्षणं । अमात्यादीनामाशान्वेषणंउपधास्यात् । तद्यथा । भावज्ञानायराज्ञाप्रेरितेनाप्तेनदुष्टोयंराजातेनमुत्सृज्यान्यमभिषेचयामोन्यंवासाधुंनृपंव्रजामइत्युक्तोअमात्यादिर्यदितद्भाषणंनमन्येततर्हिसत्यंधार्मिकोयमितिनिश्चयोधर्मपरीक्षणं । एवमर्थपरीक्षणादिबुद्ध्योदाहर्त्तव्यं । एकं ॥ २१ ॥

अथषडक्षीणादिनिःशलाकांताःपंचशब्दास्त्रिषुवाच्यलिंगाः । यस्तृतीयाद्यगोचरः तृतीयादिनानज्ञायते किंतुद्वाभ्यामेवक्रियते समंत्रादिरषडक्षीणइ त्येकं । विविक्तः । विजनः । छन्नः । निःशलाकः । रहः ॥ २२ ॥ रहः । उपांशु । सप्तविजनस्य । तत्रैकंरहः सांतंक्लीबं । द्वितीयंरहउपांशुइतिच द्वे अलिंगे । अव्ययेइत्यर्थः । तद्वत्वेरहोभवंरहस्यमित्येकं । विस्रंभः । "तालव्यमध्योपि । विश्रंभकेलिकलहेविश्वासेप्रणयेपिचेतिमेदिनी ।" वि

पंचत्रिष्वषडक्षीणोयस्तृतीयाद्यगोचरः॥ विविक्तविजनच्छन्ननिःशलाकास्तथारहः॥ २२ ॥
रहश्चोपांशुचालिंगेरहस्यंतद्भवेत्रिषु॥ समौविस्रंभविश्वासौभ्रेषोभ्रंशोयथोचितात्॥ २३॥
अभ्रेषन्यायकल्पास्तुदेशरूपंसमंजसं॥ युक्तमौपयिकंलभ्यंभजमानाभिनीतवत्॥ २४॥
न्याय्यंचत्रिषुषट्संप्रधारणातुसमर्थनं॥ अववादस्तुनिर्देशोनिदेशःशासनंचसः ॥ २५॥

श्वासः द्वे । यथोचितात्स्वरूपाद्भ्रंशः । तपनंभ्रेषःइत्येकं॥२३॥ अभ्रेषः । न्यायः । कल्पः । देशरूपं । समंजसं । पंचकंनीतेः । "प्रशस्तंदेशनंदेशरूपं । प्रशंसायांरूपप् ।" युक्तं । औपयिकं । लभ्यं । भजमानं । अभिनीतं । न्याय्यं । षट्न्यायादनपेतस्यद्रव्यादेः । अभिनीतवदितिवच्छब्दोयुक्तादी नांपर्यायत्वद्योतनार्थः । एतेषडपित्रिषु । संप्रधारणा । समर्थनं । द्वे युक्तायुक्तपरीक्षायाः । अववादः । निर्देशः । निदेशः । शासनं ॥ २५ ॥

शिष्टिः । आज्ञा । षट्कर्माज्ञापनस्य । "कार्यमवलंब्यवदनमत्रावबादः ।" संस्था । मर्यादा । धारणा । स्थितिः । चत्वारिन्याय्यमार्गस्थितेः । आ गः । अपराधः । मंतुः । त्रीण्यपराधस्य । आगःसांतंक्लीबे । मंतुःपुंसि । उद्दानं । बंधनं । द्वे बंधनस्य ॥ २६ ॥ द्विगुणोदंडोद्विपाद्यःस्यात् । एकं । द्वौ पादौपरिमाणस्यद्विपाद्यः ।" भागधेयः । करः । बलिः । त्रीणिकर्षकादिभ्योराजग्राह्यभागस्य । "धारा. पट्टी. वसूलइतिख्यातस्य । भागएवभागधे यः ।" घट्टोनदीतीरादिस्थानंकट्टाइतिख्यातं । आदिनागुल्मप्रतोल्यादि । तत्रयद्देयंनेतव्यानेतव्यवस्तुसंबंधीराजग्राह्योभागः सशुल्कःस्यात् । लमध्यो

शिष्टिश्चाज्ञाचसंस्थातुमर्यादाधारणास्थितिः॥ आगोपराधोमंतुश्चसमेतूद्दानबंधने॥ २६॥
द्विपाद्योद्विगुणोदंडोभागधेयःकरोबलिः॥ घट्टादिदेयंशुल्कोस्त्रीप्राभृतंतुप्रदेशनं॥ २७॥
उपायनमुपग्राह्यमुपहारस्तथोपदा॥ यौतकादितुयद्देयंसुदायोहरणंचतत्॥ २८॥

यं । एकं । "जकातइतिख्यातस्य । क्लीबंशुल्कं ।" प्राभृतं । प्रदेशनं ॥ २७ ॥ उपायनं । उपग्राह्यं । उपहारः । उपदा । षट्नृपगुर्वादिदर्शनादौसम र्प्यमाणस्यवस्तुनः । तत्रोपदास्त्रियां । युतकयोर्वधूवरयोरिदंयौतकं । आदिनाबंधुदेयादियद्देयंतत्सुदायः । हरणंचस्यात् । द्वे "कन्यादानकालेव्र तभीक्षादौचदीयमानद्रव्यस्य । यौतुकमपि । यौतकंयौतुकंचतदितिवाचस्पतिः ।" सुदायःपुंसि ॥ २८ ॥

तत्कालः । तदात्वं । द्वे "वर्तमानकालस्य ।" सचासौकालश्चतत्कालः । उत्तरआगामीकालआयतिःस्यात् । एकं । स्त्री । यत्सद्यःफलंतत्सांदृष्टिकं । एकं । उत्तरं भाविफलंउदर्कः स्यात् । एकं ॥ २९ ॥ वन्हिरग्न्युत्पातः तोयमतिवृष्ट्यादिः तत्कृतंयद्भयंतत्अदृष्टमित्येकं । "आदिनाहुताशनोजलं व्याधिदुर्भिक्षंमरणंतथा । अतिवृष्टिरनावृष्टिमूषकाःशलभादयोगृह्यंते ।" स्वपरराष्ट्रजन्यंचोरादियद्भयंतत्दृष्टं । एकं । राज्ञांस्वपक्षप्रभवंस्वसहायज

तत्कालस्तुतदात्वंस्यादुत्तरःकालआयतिः॥ सांदृष्टिकंफलंसद्यउदर्कःफलमुत्तरं॥ २९॥
अदृष्टंवन्हितोयादिदृष्टंस्वपरचक्रजं॥ महीभुजामहिभयंस्वपक्षप्रभवंभयं॥ ३०॥
प्रक्रियात्वधिकारःस्याच्चामरंतुप्रकीर्णकं॥ नृपासनंयत्तद्भद्रासनंसिंहासनंतुतत्॥ ३१॥

न्यंभयं अहिभयंस्यात् । एकं ॥ ३० ॥ प्रक्रिया । अधिकारः । द्वे व्यवस्थास्थापनस्य । चामरं । "चमरमपि । चामरेत्यपि । चमरंचामरेस्त्रीतुमंजरीमृगभेदयोरितिमेदिनी । चामराचमरेबालव्यजनेरोमगुच्छकइतिरभसः ।" प्रकीर्णकं । द्वे "चवरीइतिख्यातस्य ।" नृपासनं । भद्रासनं । द्वे मण्यादिकृतराजासनस्य । तन्नृपासनंस्वर्णनिर्मित्तंचेत्सिंहासनंस्यात् । एकं ॥ ३१ ॥



छत्रं । आतपत्रं । द्वे "छत्रस्य" राज्ञश्चेच्छत्रंतर्हिनृपलक्ष्मस्यात् । एकं । भद्रकुंभः । पूर्णकुंभः । द्वे पूर्णघटस्य । भृंगारः । कनकालुका । द्वे स्वर्णरचितपात्रविशेषस्य । "झारीइतिख्यातस्य ।" ॥ ३२ ॥ निवेशः । शिबिरं । द्वे सैन्यवासस्थानस्य । "सेनेचातळइतिख्यातस्य । गोटइतिख्यातस्येतिकेचित् ।" शवंतिगच्छंतिसैनिकाअस्मिन्शिबिरं । सज्जनं । उपरक्षणं । द्वे सैन्यरक्षणायनियुक्तप्रहरिकादिविन्यासस्य । "पाहरा. गस्त. इतिख्यातस्य"

हैमंछत्रंत्वातपत्रंराज्ञस्तुनृपलक्ष्मतत्॥ भद्रकुंभःपूर्णकुंभोभृंगारःकनकालुका॥ ३२॥ निवेशःशिबिरंषंढेसज्जनंतूपरक्षणं॥ हस्त्यश्वरथपादातंसेनांगंस्याच्चतुष्टयं॥ ३३॥ दंतीदंतावलोहस्तीद्विरदोनेकपोद्विपः॥ मतंगजोगजोनागःकुंजरोवारणःकरी॥ ३४॥ इभःस्तंबेरमःपद्मीयूथनाथस्तुयूथपः॥ मदोत्कटोमदकलःकलभःकरिशावकः॥ ३५॥

हस्त्यादिचतुष्टयंसेनांगंस्यात् । एकं । अत्रपादातंपदातिसमूहः । "नाविकाटविकादीनांपदातावंतर्भावः । नौकानांरथेष्वंतर्भावः । महिषादीनांगजेष्वंतर्भावइतिमुकुटः" ॥ ३३॥ दंती । दंतावलः । हस्ती । द्विरदः । अनेकपः । द्विपः । मतंगजः । गजः । नागः । कुंजरः । वारणः । करी ॥ ३४॥ इभः । स्तंबेरमः । पद्मी । पंचदशहस्तिनः । "अतिशयितः कुंजोहनुरस्यकुंजरः ।" यूथनाथः । यूथपः । द्वे यूथमुख्यस्यगजस्य । मदोत्कटः । मदकलः । द्वे मदोन्मत्तस्य । कलभः। "करभइत्यपि"। करिशावकः। द्वे करिपोतस्य । "छावाइतिख्यातस्य ॥ ३५॥

प्रभिन्नः । गर्जितः । मत्तः । त्रीणिक्षरन्मदस्य । उद्वांतः । निर्मदः । द्वे गतमदस्य । उद्वमतिस्मम दंउद्वांतः । हास्तिकं । गजता । द्वे हस्तिनांवृंदे । करिणी । धेनुका । वशा । त्रीणिहस्तिन्याः । “वशातालव्यांता” ॥ ३६ ॥ हस्तिनोगंडःकपोलःकटःस्यात् । एकं । मदः । दानं । द्वे “मदोदकस्य” वमथुः । करशीकरः । द्वे करिकरान्निर्गतजलकणस्य । शिरसःपिंडौकुंभौस्यातां । एकं । तयोःकुंभयोर्मध्येआकाशस्थानंविंदुःस्यात् । एकं ॥ ३७ ॥

प्रभिन्नोगर्जितोमत्तःसमावुद्वांतनिर्मदौ॥ हास्तिकंगजतावृंदेकरिणीधेनुकावशा ॥ ३६ ॥ गंडःकटोमदोदानंवमथुःकरशीकरः॥ कुंभौतुपिंडौशिरसस्तयोर्मध्येविंदुःपुमान्॥ ३७॥ अवग्रहोललाटंस्यादीषिकात्वक्षिकूटकं ॥ अपांगदेशोनिर्याणंकर्णमूलंतुचूलिका॥ ३८॥ अधःकुंभस्यवाहित्थंप्रतिमानमधोऽस्ययत्॥ आसनंस्कंधदेशःस्यात्पद्मकंविंदुजालकं॥ ३९॥

गजस्यललाटंअवग्रहः । “अवग्राहइत्यपि” । एकं । ईषिका । “इषीका । ईषीका । इषिका” । अक्षिकूटकं । द्वे नेत्रगोलकस्य । हस्तिनःअपांगदेशोनिर्याणं । एकं । कर्णस्यमूलंचूलिकास्यात् । एकं ॥ ३८ ॥ कुंभस्याधोभागेवाहित्थं । इदंललाटस्याप्यधोज्ञेयं । एकं । अस्यवाहित्थस्याधोभागेदंतयोर्मध्यंप्रतिमानंस्यात् । एकं । गजस्यस्कंधदेशआसनं । एकं । बिंदुजालकंबिंदुसमूहःपद्मकंस्यात् । एकं । पद्ममिवरक्तत्वात्पद्मकं । हस्तिनोदेहेहिप्रायशआरक्तबिंदवःसंति ॥ ३९ ॥



गजस्यपार्श्वभागः पक्षभागःस्यात् । एकं । अग्रतोयोभागःसदंतभागःस्यात् । एकं । हस्तिनः पूर्वजंघादिदेशोगात्रंस्यात् । पश्चाज्जंघादिदेशोवरंस्यात् । “पवर्गादिमध्यमपि । अपरंतूत्तरार्धेस्यात्पश्चाद्भागेचदंतिनामितिविश्वविश्वप्रकाशौ ।” एकैकं ॥ ४० ॥ तोत्रं । वेणुकं । “वैणुकं । तोत्रंतुप्राजनेवैणुकेपिचेतिमेदिनीविश्वप्रकाशौ ।” द्वे तोदनदंडस्य । बंधनाधारस्तंभेआलानमित्येकं । शृंखलं । अंदुकः । निगडः । त्रीणिशृंखलस्य । शृंखलापुंस्कटीवस्त्रबंधेचनिगडेत्रिष्विितिमेदिनी ।“अंदूरित्यप्यन्यत्र । अंदूस्त्रियांस्यान्निगडेप्रभेदेभूषणस्यचेतिमेदिनी ।” अंकुशः । सृणिः । “तालव्या

पार्श्वभागःपक्षभागोदंतभागस्तुयोग्रतः॥ द्वौपूर्वपश्चाज्जंघादिदेशौगात्रावरेक्रमात्॥ ४०॥ तोत्रंवैणुकमालानंबंधस्तंभेऽथशृंखले॥ अंदुकोनिगडोऽस्त्रीस्यादंकुशोऽस्त्रीसृणिःस्त्रियां॥ ४१ ॥ दूष्याकक्ष्यावरत्रास्यात्कल्पनासज्जनासमे॥ प्रवेण्यास्तरणंवर्णःपरिस्तोमःकुथाद्वयोः॥ ४२॥

दिरपि । शृणिरंकुशवाचीचकाशश्चतृणवाचकइतिशभेदः । द्वे अंकुशस्य । सृणिः स्त्रियां । आरक्षमग्रमवमत्यसृणिंशिताग्रमितितुमाघस्यप्रमादः॥ ४१ ॥दूष्या । “चूष्येतिमुकुटः।” कक्ष्या । वरत्रा । त्रयंमध्यबंधनोपयोगिन्याश्चर्मरज्ज्वाः । कक्षायांमध्यदेशेभवाकक्ष्या । कल्पना । सज्जना । द्वे नायकारोहणार्थंगजसज्जीकरणे । प्रवेणी । आस्तरणं । वर्णः । परिस्तोमः । कुथः । पंच गजपृष्ठवर्तिनआस्तरणस्य । स्त्रियांतुकुथा । “स्त्रीप्रवेणीकुथंत्रिष्विितिबोपालितः ।” प्रवेणीस्त्रियां । “प्रवेणिःस्त्रीकुथावेण्योरितिमेदिनी ॥ ४२ ॥

असारंयुद्धाद्यक्षमंहस्त्यश्वं हस्तीचाश्वश्चतद्वीतमुच्यते। सेनांगत्वात्समाहारः। गजबंधनीगजालानभूःवारीस्यात्। वार्यतेऽनयावारी। एकं। घोटकः। "घोटइत्यपि। घोटसैंधवगंधर्वाहयवाजितुरंगमाइतिरभसः।" वीतिः। "पीतिरित्यपि। पीतिर्नाश्वेस्त्रियांपानइतिमेदिनी। पीतिःपानेतुरंगेचेतिविश्वप्रकाशः। तुरगः। तुरंगः। अश्वः। तुरंगमः॥४३॥ वाजिः। वाहः। अर्वा। गंधर्वः। हयः। सैंधवः। सप्तिः। त्रयोदशघोटकस्य। वीतिरिदंतः। अर्वानकारांतः। अर्वंतौ। वाजिनौ। येकुलीनाः प्रशस्तजातिभवाअश्वास्तेआजानेयाः। एकं। "आजेनक्षेपेणानेयाःप्रापणीयाआजानेयाः। अश्व

वीतंत्वसारंहस्त्यश्वंवारीतुगजबंधनी॥ घोटकेवीतितुरगतुरंगाश्वतुरंगमाः॥ ४३॥
वाजिवाहार्वगंधर्वहयसैंधवसप्तयः॥ आजानेयाःकुलीनास्युर्विनीताःसाधुवाहिनः॥ ४४॥
वनायुजाःपारसीकाःकांबोजाबाल्हिकाहयाः॥ ययुरश्वोश्वमेधीयोजवनस्तुजवाधिकः॥ ४५॥

शास्त्रंतु। शक्तिभिर्भिन्नहृदयास्खलंतश्चपदेपदे आजानंतियतःसंज्ञामाजानेयास्ततःस्मृताइति" येसाधुवाहिनः शोभनंवहंतितेविनीताःस्युः। एकं। ॥४४॥ वनायुदेशेजाताः वनायुजाः। एवंपारसीकाः। विदेशजाताःपारसीकादयोहयभेदाःस्युः। एकैकं। 'वनायुजःपारसीकउक्तइतिरत्नकोशात्। श्वेताश्वंकर्काख्यंवनायुजमपिपारसीकमितिनाममालायाश्चवनायुजपारसीकौपर्यायशब्दावपि। बाल्हीकंबाल्हिकंधीरहिंगुनोर्नाश्वदेशयोरितित्रिकांडशेषाद्दीर्घमध्योपिबाल्हीकइति।" योश्वमेधीयःअश्वमेधायहितोऽश्वःसययुरित्येकं। योजवेनवेगेनाधिकःसजवनः। एकं॥ ४५॥



पृष्ठ्यः। स्थौरी। द्वे जलादिभारवाहिनोऽश्वस्य। "स्थौरंबलमस्यास्तीतिस्थौरी। स्थोरीत्यपि" सितःशुक्लोऽश्वःकर्कइत्येकं। योरथस्यवोढासरथ्यइत्येकं। अस्यबालः किशोरः। एकं। "शिंगरूइतिख्यातस्य।" उपचारादन्यत्रापिप्रयोगः। वामी। अश्वा। वडवा। त्रीण्यश्वायाः। "घोडीइतिख्यातायाः।" गणेवडवानांसमूहेवाडवं। एकं॥ ४६॥ अश्वेनएकेनदिनेनगम्यतेयद्वर्त्मतदाश्वीनंत्रिषु। एकं अश्वानांमध्यंकश्यं। एकं। क

पृष्ठ्यःस्थौरीसितःकर्कोरथ्योवोढारथस्ययः॥ बालःकिशोरोवाम्यश्वावडवावाडवंगणे॥
॥ ४६॥ त्रिष्वाश्वीनंयदश्वेनदिनेनैकेनगम्यते॥ कश्यंतुमध्यमश्वानांहेषाह्रेषाचनिस्वनः॥ ४७॥ निगालस्तुगलोद्देशोवृंदेत्वश्वीयमाश्ववत्॥

शामर्हतिकश्यं। अश्वस्यनिस्वनः शब्दःहेषाह्रेषाचस्यात्। द्वे॥ ४७॥ गलोद्देशः गलजत्रुसंधिःनिगालःस्यात्। एकं। "घंटाबंधसमीपस्थोनिगालःकीर्तितोबुधैः। तस्मिन्नेवमणिर्नामरोमजःशुक्लकृन्मतइत्यश्वशास्त्रं।" अश्वीयं। आश्वं। द्वे अश्वानांवृंदे। वतानिर्देशोद्वयोस्तुल्यत्वद्योतनाय॥

अमूः आस्कंदिताद्याः अश्वानांपंचगतयः धाराख्याः। एकं। यत्रवेगार्तोश्वोनशृणोतिनपश्यति। तादृशीगतिरास्कंदितं। "भरपल्ला· भरधांवचालइति प्रसिद्धं। केवलगत्यर्थेगृहीतेचवडचालइतिप्रसिद्ध आस्कंदितमित्यपिमतं" चातुर्येणयुक्तासरलागतिर्धौरितकं। "धोरितकमितिहेमचंद्रः। तुरकी गामचालइतिप्रसिद्धं" मध्यमवेगेनचक्रवद्भ्रमणंरेचितं। "दुडकीचालइतिप्रसिद्धं।" अग्रकायंसमुल्लस्यकुत्सितस्थलादौकुंचितास्यंविचलनंवल्गितं। "बाजीचालइतिप्रसिद्धं।" पूर्वापरोन्नमनतः क्रमादारोपणंप्लुतं। "चौकचालइतिप्रसिद्धं ॥ ४८ ॥ अश्वस्यघोणानासिकाप्रोथमित्येकं। "पुंसि

आस्कंदितंधौरितकंरेचितंवल्गितंप्लुतं॥४८॥ गतयोमूःपंचधाराघोणातुप्रोथमस्त्रियां॥ कविकातुखलीनोऽस्त्रीशफंक्लीबेखुरःपुमान्॥४९॥पुच्छोऽस्त्रीलूमलांगूलेवालहस्तश्चवालधिः॥त्रिषूपावृत्तलुठितौपरावृत्तेमुहुर्भुवि॥५०॥

क्लीबेच।" कविका। खलीनः। "खलिनमित्यपि।" द्वे लोहादिनिर्मितस्यमुखमध्येनिहितस्य। कडियाली। "लगाम।" इतिख्यातस्य। "कवीत्यप्यन्यत्र। क्लीबेखलीनं।" कवतेदंतेनशब्दायतेकविका। शफं। खुरः। "क्षुरइतिभरतमालायां।" द्वे "सुंभइतिख्यातस्य"। खुरतिविलिखतिक्ष्मांखुरः ॥ ४९॥ पुच्छः। लूमं। लांगूलं। "लांगुलमित्यपि"। त्रीणि "दांडीइतिख्यातस्य। पुच्छः अस्त्रीपुन्नपुंसकं"। लूममदंतं। वालहस्तः। वालधिः। द्वेकेशसमूहयुक्तस्य पुच्छाग्रभागस्य। वालधिःपुमान्। उपावृत्तः। लुठितः। द्वेश्रमशांत्यर्थंमुहुर्भुविपार्श्वाभ्यांपरावृत्तस्याश्वस्य ॥ ५० ॥

युद्धमर्थःप्रयोजनंयस्य तस्मिन्चक्रयुक्तेयाने शतांगः। स्यंदनः॥ रथः। इतित्रयं। यच्चक्रयुतंयानंसमराययुद्धार्थंनभवतिअसौपुष्परथःस्यात्। एकंक्रीडारथस्य। यथापुष्यनक्षत्रंसुखकरंतद्वद्रथोपीतिपुष्यरथः। अंतस्थमध्यः। "पकारमध्यपाठोपि। तत्रकुसुमाकारत्वात्पुष्पमिवरथइतिविग्रहः।" ॥ ५१ ॥ कर्णीरथः। प्रवहणं। डयनं। "। हयनमित्यपि। हयगतौ"। त्रयं स्त्रीणांवाहनार्थंकृतस्योपरिवस्त्रादिनापिहितस्यरथविशेषस्य। "बुरख्याचीगाडीइतिप्रसिद्धस्य"। यल्लक्ष्यं। कर्णीरथस्थांरघुनाथपत्नीं ॥ अनः। शकटः। द्वे। "गाडाइतिख्यातस्य। शकटःपुंसिक्लीबेच। शक्नोति

यानेचक्रिणियुद्धार्थेशतांगःस्यंदनोरथः॥ असौपुष्यरथश्चक्रयानंनसमराययत्॥ ५१॥
कर्णीरथःप्रवहणंडयनंतुसमंत्रयं॥ क्लीबेऽनःशकटोऽस्त्रीस्याद्गंत्रीकंबलवाह्यकं॥ ५२॥
शिबिकायाप्ययानंस्याद्दोलाप्रेंखादिकास्त्रियां॥ उभौतुद्वैपवैयाघ्रौद्वीपिचर्मावृतेरथे॥ ५३॥

भारंवोढुंशकटः"। अनःसांतं। कंबलिभिर्वृषैर्वाह्यंवोढव्यंयच्छकटंसागंत्री। "गांत्रीतिमुकुटः"। एकं। "गाडीइतिख्यातस्य" स्त्रियां ॥ ५२ ॥ शिबिका। याप्ययानं। द्वेपुरुषवाह्यस्ययानविशेषस्य। "पालखीइतिख्यातस्य"। दोला। "डोषीदोली"। प्रेंखा। द्वे दोलायाः हिंदोळाइतिख्यातायाः। "डोलीइतिख्यातायावा"। आदिशब्दात्शयनखट्वावाह्यादिदोला। द्वीपीव्याघ्रस्तच्चर्मणाप्रावृतेरथेद्वैपः। वैयाघ्रःइतिद्वयं ॥ ५३ ॥

कटूफलेकायफलइतिख्यातेवृक्षभेदेशुक्लखदिरेचसोमवल्कः । सिल्हकेपण्यभेदेतिलकल्केनिःस्नेहतिलचूर्णेचपिण्याकः । रामठेहिंगुनि । चकाराद्बाल्हिकेदेशेऽश्वेधीरेच । ह्रस्वमध्यंचबाल्हिकमितिबाल्हीकमित्यपि” ॥ ९॥ व्यालग्राह्याहितुंडिकः । कौशिकोनकुलेव्यालग्राहेगुग्गुलशुक्रयोः विश्वामित्रेचकोशज्ञोलूकयोरपिकौशिकइतिविश्वः । रुक्रोगः। तापः। संतापः शंकाभयंअत्रातंकइतिनाम । स्वल्पेअपिशब्दान्नीचकनिष्ठदरिद्रेष्वपिक्षु

सितेचखदिरेसोमवल्कःस्याद्थसिल्हके॥ तिलकल्केचपिण्याकोबाल्हीकंरामठेपिच॥ ९॥ महेंद्रगुग्गुलूलूकव्यालग्राहिषुकौशिकः॥ रुक्तापशंकास्वातंकःस्वल्पेपिक्षुल्लकस्त्रिषु॥ १०॥ जैवातृकःशशांकेपिखुरेप्यश्वस्यवर्तकः॥ व्याघ्रेपिपुंडरीकोनायवान्यामपिदीपकः॥ ११॥ शालावृकाःकपिक्रोष्टुश्वानःस्वर्णेपिगैरिकं॥ पीडार्थेपिव्यलीकंस्याद्लीकंत्वप्रियेऽनृते॥ १२॥

ल्लकः ॥ १० ॥ जैवातृकःपुमान्सोमेदीर्घायुःकृशयोस्त्रिषु । अपिशब्दात्पक्षिभेदेचवर्तकः । अपिशब्दादग्नौदिग्गजादौचपुंसिपुंडरीकः । सितांभोजादौक्लीबेच । यवानीओषधीभेदःअजमोदाख्यः । अपिशब्दाद्बर्हिचूडेपिदीपकः । प्रकाशेपि । “ दीप्यकइत्यपि ” ॥ ११ ॥ कप्यादयःशालावृकाःस्युः । अपिशब्दाद्विरूइतिख्याते । धातौचगैरिकं “ गैरिकंधातुरुक्मयोरितिमेदिनी । ” व्यलीकमप्रियाकार्यवैलक्ष्येष्वपिपीडनेइतिविश्वः ॥ १२ ॥

शीलंस्वभावोऽन्वयोवंशःतत्रानूकमिति “ अनूकंतुकुलेशीलेपुंसिस्याद्गतजन्मनीतिमेदिनी ।” शकलंखंडं । वल्कलंत्वक् । द्वे शल्केइति । सुवर्णानांहेम्नःकर्षाणांसाष्टेशतेऽष्टाधिकशतकेनिष्कः । सहाष्टभिर्वर्तितइतिसाष्टंसराजस्त्वयमितिवत् । तथाहेम्निसुवर्णमात्रेउरसोवक्षसोभूषणेहेमपलेचदीनारेसांव्यवहारिकेद्रव्यभेदेचनिष्कः । पलंकर्षचतुष्टयं । गुंजानामशीतिःकर्षः ॥ १३ ॥ शमलंपुरीषं । एनःपापं । “ त्रिषुपापशयेकल्कोऽस्त्रीविट्

शीलान्वयावनूकेद्वेशल्केशकलवल्कले ॥ साष्टेशतेसुवर्णानांहेम्न्युरोभूषणेपले॥ १३ ॥ दीनारेपिचनिष्कोऽस्त्रीकल्कोऽस्त्रीशमलैनसोः ॥ दंभेप्यथपिनाकोऽस्त्रीशूलशंकरधन्वनोः॥ १४ ॥ धेनुकातुकरेण्वांचमेघजालेचकालिका॥ कारिकायातनावृत्त्योःकर्णिकाकर्णभूषणे॥ १५॥

किट्टेभदंतयोरितिविश्वः । कल्कोऽस्त्रीघृततैलादिशेषेदंभेविभीतकइतिमेदिनी ” पिनाकोऽस्त्रीरुद्रचापेपांसुवर्षत्रिशूलयोरितिमेदिनी ॥ १४॥ करेण्वांहस्तिन्यांचकारान्नवप्रसूतायांगविधेनुका । मेघजालेमेघघंटेचकाराद्देवताविशेषेपिकालिका । वृत्तिर्विवरणश्लोकः । यथाग्रन्थकारिका । “यातनाकृत्योरित्यपिपाठः । कारिकानटयोषिति । कृतौविवरणश्लोकेशिल्पयातनरयोपि । नपुंसकंतुकर्मादौकारकेकर्त्तरित्रिष्वितिमेदिनी ।” ॥ १५ ॥

करिहस्तांगुलौगजशुंडाग्रेकमलांतर्गतकोशेचकर्णिका । "कर्णिकाकरिहस्ताग्रेकरमध्यांगुलावपि । क्रमुकादिच्छटांशेब्जवराटेकर्णभूषणइतिमेदिनी" । उत्तरेअतःपरंखांतेभ्यःप्राक्शब्दास्त्रिषुत्रिलिंगाइत्यर्थः । "वृंदारकःसुरेपुंसिमनोज्ञश्रेष्ठयोस्त्रिष्वितिमेदिनी" मुख्यश्चान्यश्चकेवलश्चेतिएकेस्युः ॥ १६ ॥ दांभिकोमायावी । योदूरेरितेक्षणःसचकौक्कुटिकइत्युच्यते । योभृत्यःकोपप्रसादचिन्हज्ञानायप्रभोर्भालंललाटमेवपश्यति । भावद

करिहस्तांगुलौपद्मबीजकोश्यांत्रिषूत्तरे ॥ वृंदारकौरूपिमुख्यावेकेमुख्यान्यकेवलाः ॥ १६ ॥ स्याद्दांभिकःकौक्कुटिकोयश्चादूरेरितेक्षणः ॥ लालाटिकःप्रभोर्भालदर्शीकार्याक्षमश्चयः ॥ १७ ॥ "भूभृन्नितंबवलयचक्रेषुकटकोऽस्त्रियां ॥ सूच्यग्रेक्षुद्रशत्रौचरोमहर्षेचकंटकः ॥ १ ॥ पाकौपक्तिशिशूमध्यरत्नेनेतरिनायकः ॥ पर्यंकःस्यात्परिकरेस्याद्व्याधेपिचलुब्धकः ॥ २ ॥

र्शीत्यपिपाठःयश्चकार्याक्षमःप्रभोःकार्यंकर्तुमशक्तःतावुभौलालाटिकौ । लालाटिकःसदालस्येप्रभुभावनिदर्शिनीत्यजयः । इतोभूभृन्नितंबेत्यादयःकेचिदमूलकाएवश्लोकाः । अतस्तेषांव्याख्यानाभावः ॥ १७ ॥



इतिकांताः । ॥ "खांतानाह" त्विट्करज्वालासुमयूखः । अत्रत्विट्शोभा । करःकिरणः । भ्रमरशरौशिलीमुखौ । निधौनिधिभेदे । कंबौचशंखः । अपिशब्दादाकाशेपिशून्येखं । खमिंद्रियेपुरेक्षेत्रेशून्यबिंदौविहायसि । संवेदनेदेवलोकेशर्मण्यपिनपुंसकमितिमेदिनी" ॥ १८ ॥ घृणिः

आर्द्रायामपिलुब्धकइत्यपिपाठः ॥ पेटकस्त्रिषुवृंदेपिगुरौदेश्येचदेशिकः ॥ खेटकौग्रामफलकौधीवरेपिचजालिकः ॥ ३ ॥ पुष्परेणौचकिंजल्कःशुल्कोऽस्त्रीस्त्रीधनेपिच ॥ स्यात्कल्लोलेप्युत्कलिकावार्द्धकंभाववृंदयोः ॥ ४ ॥ करिण्यांचापिगणिकादारकौबालभेदकौ ॥ अंधेप्यनेडमूकःस्यात्टंकौदर्पाश्मदारणौ ॥ ५ ॥" ॥ इतिपंचक्षेपकाः ॥ इतिकांतवर्गः ॥ मयूखस्त्विट्करज्वालास्वलिबाणौशिलीमुखौ ॥ शंखोनिधौललाटास्थ्निकंबौनस्त्रींद्रियेपिखं ॥ १८ ॥ घृणिज्वालेअपिशिखे ॥ खांताः ॥ शैलवृक्षौनगावगौ ॥ आशुगौवायुविशिखौशरार्कविहगाःखगाः ॥ १९ ॥

किरणः । अपिशब्दाच्चूडायांप्रपदेबर्हिचूडायांचशिखा । इतिखांतवर्गः । गांतानाह । शैलवृक्षौनगसंज्ञकावगसंज्ञकौच । विशिखोबाणः । बाणार्कपक्षिणःखगशब्दवाच्याः । अर्केतिग्रहणमुपलक्षणं ॥ १९ ॥

चकाराच्छालिप्रभेदेपतंगः । क्रमुकोवृक्षभेदः । तत्फलेतुक्लीबंपूगं । वृंदंसमूहः । पशवोहरिणाद्याः । अपिशब्दात्मृगशीर्षेमार्गणायांचमृगः । जवोरंहः । अपिशब्दाद्विष्टादेर्बहिर्निर्गमेपि ॥ २० ॥ कुसुमसंबंधिनिरेणौ । स्नात्यनेनस्नानीयंगंधचूर्णविशेषः । आदिनासुरतादिश्रमशांतयेकामशास्त्राद्युक्तंयत्कर्पूरादिचूर्णंतद्ग्रहः । अपिशब्दादुपरागेपिपरागः । रजसिधूलौ । नागमातंगौगजेवर्तेते । अपिशब्दात्काद्रवेयनागकेशरनागकल्लीहास्तिनपुरमेघमुस्तकादौनागःपुंसि । क्लीबंसीसलवंगयोः । अपिशब्दाच्चंडालेपिमातंगः । "अपिशब्दात्" नेत्रस्यांतेंऽगहीनेचापांगः ॥ २१ ॥ स्वभावःप्रकृतिः । निर्मोक्षस्त्यागः । निश्चयेयथा । गृहाणशस्त्रंयदिसर्गएषतइतिरघुः अध्यायः काव्यादिविरामस्थानं । सृष्टिर्निर्माणंएतेषुसर्गः । "सर्गस्तुनिश्चयाध्यायमोहोत्साहात्मदृष्टिष्विवितिमेदिनी ।" सन्नहनंकवचः । उपायःसामादिः । ध्यानंचित्तवृत्तिनिरोधः । संगतिःसंगमइत्यादिषुयोगशब्दः ।" योगोपूर्वार्थसंप्राप्तौसंगतिध्यानयुक्तिषु । वपुस्थैर्यप्रयोगेचविष्कंभादिषुभेषजे । विश्रब्धघातकेद्रव्योपायसन्नहनेष्वपि । कार्मणेपिचेतिमेदिनी"॥२२॥

पतंगौपक्षिसूर्यौचपूगःक्रमुकवृंदयोः ॥ पशवोऽपिमृगावेगःप्रवाहजवयोरपि ॥ २० ॥
परागःकौसुमेरेणौस्नानीयादौरजस्यपि ॥ गजेपिनागमातंगावपांगस्तिलकेपिच ॥ २१ ॥
सर्गःस्वभावनिर्मोक्षनिश्चयाध्यायसृष्टिषु ॥ योगःसन्नहनोपायध्यानसंगतियुक्तिषु ॥ २२ ॥



रुयादिभृतौपण्यस्त्रीणां । आदिशब्दाद्धस्त्यश्वादिकर्मकराणां भृतौमूल्येपालनेभरणेवाभोगः । पालनेभ्यवहारेचनिर्वेशेपण्ययोषितामितिविश्वः । अहेः सर्पस्य । शबलेकर्बुरेत्रिलिंग्यां । "सारंगःपुंसिहरिणेचातकेचमतंगजेशबलेत्रिष्वितिमेदिनी" ॥ २३ ॥ कपौवानरेचकाराद्भेकेसारथ्यादौचप्लवगः । शापेआक्रोशेपराभवेतिरस्कारेऽभिषंगः । यानाद्यंगेरथशकटादीनामवयवेयुगः । युग्मेद्वयेकृतत्रेतादिषुहस्तचतुष्टयेऔषधभेदेचयुगं ॥ २४॥ इषुःशरः । पशूसुरभिवृषौ । घृणोरश्मिः । स्वर्गादीनांदशानांद्वद्वैक्यं । लक्ष्यदृष्ट्याप्रयोगानुसारेणगोशब्दःस्त्रियांपुंसिचोन्नेयः। यथासुरभौस्त्रियां । वृषभेपुंसि । गौः स्वर्गेवृषभेरश्मौवज्रेशीतकरेपुमान् । अर्जुनीनेत्रदिग्बाणभूवागादिषुयोषितीतिविश्वः । योषिति । स्त्रीलिंगे । कोशांतरेतुगौर्नादित्येबलीवर्देकिरणक्रतुभेदयोः । स्त्रीतुस्याद्दिशिभारत्यां भूमौचसुरभावपि । नृस्त्रियोःस्वर्गवज्रांबुरश्मिदृग्बाणलोमस्वित्ति । शेफः शिश्नः । अनुमानेहरमूर्तिभेदेचलिंगं । "लिंगंचिन्हेऽनुमानेचसांख्योक्तप्रकृतावपि । शिवमूर्तिविशेषेपिमेहनेपिनपुंसकमितिमेदिनी " ॥ २५ ॥

भोगःसुखेरुयादिभृतावहेश्चफणकाययोः ॥ चातकेहरिणेपुंसिसारंगःशबलेत्रिषु ॥ २३ ॥
कपौचप्लवगःशापेत्वभिषंगःपराभवे ॥ यानाद्यंगेयुगःपुंसियुगंयुग्मेकृतादिषु ॥ २४ ॥
स्वर्गेषुपशुवाग्वज्रदिङ्नेत्रघृणिभूजले ॥ लक्ष्यदृष्ट्यास्त्रियांपुंसिगौर्लिंगंचिन्हशेफसोः ॥ २५ ॥

प्राधान्यं । प्रभुत्वं । सानुःशिखरं । चकारात्पशोरवयवेशृंगं । "शृंगंप्रभुत्वेशिखरेचिन्हेक्रीडांबुयंत्रके । पाषाणोत्कर्षयोश्चापिशृंगःस्यात्कूर्चशीर्षकइति मेदिनी" । मूर्धामस्तकः । गुह्यंयोनिः । श्रीःसंपच्छोभा । कामइच्छाच । महात्म्यंऐश्वर्यं । यत्नःप्रयत्नः । अर्ककीर्तीसूर्ययशसीभगं । "भगंश्रीयोनि वीर्येच्छाज्ञानवैराग्यकीर्तिषु । माहात्म्यैश्वर्ययत्नेषुधर्मेमोक्षेऽथनारवावितिमेदिनी ।" ॥ इतिगांतवर्गः ॥ २६ ॥ परिघातेपरितोहननेअस्त्रेलोहमयलगुडेऽपिशब्दाद्योगभेदेचपरिघः । अंभसांरयेजलप्रवाहेओघः । परंपरायांनृत्यभेदेच । मूल्येपण्येपूजोपहारेचार्घः । अंहःपापं । दुःखंजरामरणादि

श्रृंगंप्राधान्यसान्वोश्चवरांगंमूर्द्धगुह्ययोः ॥ भगंश्रीकाममाहात्म्यवीर्यरत्नार्ककीर्तिषु ॥ २६ ॥ इ
तिगांताः॥ परिघःपरिघातेऽस्त्रेप्योघोवृंदेंभसांरये॥ मूल्येपूजाविधावर्घोंहोदुःखव्यसनेष्वघं ॥ २७
त्रिष्विष्टेल्पेलघुः॥ इतिघांताः॥ काचाःशिक्यमृद्भेददृग्रुजः॥ विपर्यासेविस्तरेचप्रपंचःपावकेशुचिः॥ २८॥

कं । व्यसनंमृगयाद्यूतादि । विपद्रागद्वेषादिवा तत्राघं ॥ २७ ॥ इष्टे । "मनोऽज्ञेल्पेगुरौ" लघुस्त्रिषु । "निःसारेचत्रिषु ।" इतिघांताः ॥ ॥ घांतकथनानंतरंचकारांतास्तृताः । शिक्यं । दधिभांडादिलंबनार्थरज्जुसमूहकृतआश्रयविशेषः । मृद्भेदोमृद्विशेषः । यल्लक्ष्यं । काचःकाचोमणिर्मणिरिति । दृग्रुक् नेत्ररोगःपटलप्रायः ।एतेत्रयःकाचाः । विपर्यासेवैपरीत्ये । चात्प्रतारणेप्रपंचः । पावकेऽग्नौशुचिःपुंसि ॥ २८ ॥



मास्याषाढेअमात्येसचिवेअत्युपधेउपधाधर्माद्यैःपरीक्षणंतामतिक्रांतेशुद्धचित्तेइत्यर्थः । "एतेषुचपुंसि ।" शुचिर्ग्रीष्माग्निशृंगारेष्वाषाढेशुद्धमंत्रिणि ज्येष्ठेचपुंसिधवलेशुद्धेऽनुपहतेत्रिष्वितिमेदिनी । मेध्येपवित्रेसितेशुक्लेचत्रिषु । स्पृहायामत्यासक्तौगभस्तौकिरणेचकाराद्दीप्तौशोभायांचरुचिः॥ २९॥ इतिचांताः । "अपिशब्दात्स्फटिकेअच्छः । स्तंबेकलापेचगुच्छः । तुन्नवृक्षेनादरुखीइतिप्रसिद्धेद्वेनौकांगेचकच्छः ॥ १ ॥ इतिछांताः ।" केकि

मास्यमात्येचात्युपधेपुंसिमेध्येसितेत्रिषु॥ अभिष्वंगेस्पृहायांचगभस्तौचरुचिःस्त्रियां॥ २९॥ इतिचांताः॥
"प्रसन्नेभल्लुकेप्यच्छोगुच्छस्तबकहारयोः ॥ परिधानांचलेकच्छोजलप्रांतेत्रिलिंगकः॥ १ ॥ इतिक्षेपक
श्छांतः॥" केकिताक्ष्यावहिभुजौदंतविप्रांडजाद्विजाः॥ अजाविष्णुहरच्छागागोष्ठाध्वनिवहाव्रजाः ॥ ३० ॥

ताक्ष्यौंमयूरगरुडौ । अहीन्भुंक्तेइत्यहिभुक् । विप्रेत्युपलक्षणं । क्षत्रवश्ययौः । विप्रक्षत्रियविट्शूद्रावर्णास्त्वाद्याद्विजाःस्मृताइतिस्मृतेः । अंडजाःपक्षिणः । एतेद्विजाः । छागोबस्तःअजोहारेहरौकामेविधौछागेरघोःसुतइतिविश्वः । गोष्ठंगोस्थानकं ।अध्वामार्गः । निवहःसंघः । एतेव्रजाः ॥ ३० ॥

जिनोबुद्धः । युधिष्ठिरेपिधर्मराजशब्दः । दंतिदंतेकुंजः । अपिशब्दान्निकुंजे "हनौचापिपुन्नपुंसकलिंगः ।" क्षेत्रेनगरद्वारेचवलजंक्लीबं । "वल जंगोपुरेक्षेत्रेसस्यसंगरयोरपीतिमेदिनी ।" वल्गुदर्शनावरस्त्रीत्यर्थः ॥ ३१॥ समः क्ष्मांशेभूभागेतत्रआजिरिति । रणेसंग्रामे । संततिरपत्यं । चकाराद्ध न्वंतरावब्जः । पद्मेपिअब्जं ॥स्वकेआत्मीयेनित्येचिरस्थिते । यथाधर्मोनिजःनित्यइत्यर्थः । इतिजांताः ॥ ३२ ॥ यांतानाह । आत्मनिपुरुषेक्षेत्रज्ञःपुंसि।

धर्मराजौजिनयमौकुंजोदंतेऽपिनस्त्रियां ॥ वलजेक्षेत्रपूर्द्वारेवलजावल्गुदर्शना ॥ ३१ ॥ समेक्ष्मांशेरणे प्याजिःप्रजास्यात्संततौजने ॥ अब्जौशंखशशांकौचस्वकेनित्येनिजंत्रिषु ॥ ३२॥ इतिजांताः॥ पुंस्यात्म निप्रवीणेचक्षेत्रज्ञोवाच्यलिंगकः॥ संज्ञास्याच्चेतनानामहस्ताद्यैश्चार्थसूचना॥ ३३॥ इतिञांताः॥

प्रवीणेतुवाच्यलिंगकः । चेतनाधीः । नामाभिधानं । हस्ताद्यैर्हस्तभ्रूलोचनादिभिर्याअर्थसूचनाप्रयोजनविज्ञापनंसापिसंज्ञा । "गायत्रीसूर्यस्त्रीचसं ज्ञा ।" ॥ ३३ ॥ अत्रक्षेपकोयं । दोषज्ञौवैद्यविद्वांसौज्ञोविद्वान्सोमजोपिच । विज्ञौप्रवीणकुशलौकालज्ञौज्ञानिकुक्कुटावितिञांताः ॥ १ ॥



काकश्चेभगंडोहस्तिकपोलश्चकाकेभगंडौ । "करटौस्यातां । करटोगजगंडेस्यात्कुसुंभेनिंद्यजीवने । एकादशाहादिश्राद्धेदुर्दुरूटेपिवायसे । करटोवा द्यभेदेइतिमेदिनी" । गजगंडःकटिश्चकटौस्यातां । कटिःश्रोणिः । "कटःश्रोणौक्रियाकारेकालिंजेऽतिशयेशवे । समयेगजगंडेपिपिप्पल्यांतुकटी मतेतिविश्वः ।" रुजानिष्केशशिराःखलतिःतस्मिन्दुश्चर्मणिनिष्कुषितत्वचिमहेश्वरेशिपिविष्टः । "शिपविष्टःशिविपिष्टइतिराजमुकुटः ।" ॥३४ ॥

काकेभगंडौकरटौगजगंडकटीकटौ ॥ शिपिविष्टस्तुखलतौदुश्चर्मणिमहेश्वरे ॥ ३४ ॥ देवशिल्पिन्यपित्वष्टादिष्टंदैवेपिनद्वयोः ॥ रसेकटुःकट्वकार्येत्रिषुमत्सरतीक्ष्णयोः॥ रिष्टं क्षेमाशुभाभावेष्वरिष्टेतुशुभाशुभे॥ ३५॥ ७

देवशिल्पिनिविश्वकर्मण्यपिशब्दाद्रविभेदेकाष्ठतक्षेत्वष्टा । दैवेप्राक्तनकर्मणिनपुंसकं । अपिशब्दात्काकेतुना । रसेपिप्पल्यादिरसभेदेकटुःपुंसि। अकार्येकरणानर्हेकटुक्लीबं । मत्सरतीक्ष्णयोस्त्रिषु । क्षेमेकल्याणे । अशुभेऽमंगले । अभावेअशुभस्यैवाभावेरिष्टमिति। शुभाशुभेअरिष्टे। सूतिकागृ हंचारिष्टं। "अरिष्टमशुभेनक्रेसूतिकागारआसवे । शुभेमरणचिन्हेचेतिमेदिनी ।" ॥ ३५ ॥

मायादिषुनवसुकूटं । तदस्त्रियां । अन्यथाकारदर्शनंमाया । निश्चलमविकारमाकाशादि । यंत्रंमृगबंधनविशेषः । कैतवंकपटं । अनृतंअसत्यं । राशिःपुंजः । अयोघनोलोहहननार्थआयुधविशेषः । सीरायंहलायं ॥३६॥ सूक्ष्मैलाप्रसिद्धा । कालेऽल्पस्वाक्षरचतुर्थभागग्रहणात्मकेकालभेदे । अल्पेलेशे । संशयेसंदेहे । अर्तिश्चापायं । उत्कर्षःप्रकर्षः । अश्रिःकोणः । संख्याभेदेपिकोटिःस्यात्कोटिरश्मौचापाग्रेसंख्याभेदप्रकर्षयोरितिविश्वः। मूले

मायानिश्चलयंत्रेषुकैतवानृतराशिषु ॥ अयोघनेशैलशृंगेसीरांगेकूटमस्त्रियां ॥ ३६ ॥ सूक्ष्मैलायांत्रुटिःस्त्री स्यात्कालेल्पेसंशयेऽपिसा ॥ अर्त्युत्कर्षाश्रयःकोट्योमूलेलग्नकचेजटा ॥ ३७ ॥ व्युष्टिःफलेसमृद्धौचदृष्टिर्ज्ञाने क्षिणदर्शने॥इष्टिर्यागेच्छयोःसृष्टंनिश्चितेबहुनित्रिषु ॥ ३८॥ कष्टेतुकृच्छ्रगहनेदक्षामंदागदेषुच ॥

संश्लिष्टकेशेजटा । मांस्यांवेदविकृतौच ॥ ३७ ॥ फलेसाध्ये । समृद्धौसंपदिव्युष्टिः । अक्षिणिचक्षुषि । यागोयज्ञः । इच्छास्पृहा "इष्टिर्मताभिलाषेपिसंग्रहश्लोकयागयोरितिमेदिनी" बहुनिप्रचुरे । मुक्तनिर्मितयोश्चसृष्टं ॥ ३८ ॥ कृच्छ्रंदुःखं । गहनंदुरधिगमांतःप्रांतं । उभेकष्टे । दक्षोऽनलसः । अमंदस्तीक्ष्णः । अगदोरोगहीनः । एतेपटवः ॥

द्वौकष्टपटूवाच्यलिंगौ ॥ ॥ इतिटांताः । अपिशब्दान्मयूरेपिनीलकंठः ॥ ३९ ॥ अंतर्जठरंजठरस्यांतरं । कुसूलोधान्यागारं । अंतर्गृहंगृहाभ्यंतरंचएतेषुकोष्ठःपुंसि । निष्पत्तिर्निष्पादनं । नाशःअदर्शनं । अंतःप्रध्वंसः । स्थितौमर्यादायांकालविशेषेपि ॥ ४० ॥ अतिशस्तेसुप्रशस्ते । अपिशब्दादतिवृद्धे । अग्रजेमासिच । अतियूनिबाले । अनुजेऽपिकनिष्ठः ॥ ॥ इतिठांताः ॥ ॥ दंडोदमेमानभेदेलगुडेयमसैन्ययोः । व्यूहभेदेप्रकांडेश्वे

पटुद्वौवाच्यलिंगौच॥इतिटांताः॥नीलकंठःशिवेपिच ॥३९॥ पुंसिकोष्ठोंतर्जठरंकुसूलोंतर्गृहंतथा॥निष्ठानिष्पत्तिनाशांताःकाष्ठोत्कर्षेस्थितौदिशि ॥ ४० ॥ त्रिषुज्येष्ठोऽतिशस्तेऽपिकनिष्ठोऽतियुवाल्पयोः॥ इतिठांताः॥ दंडोऽस्त्रीलगुडेपिस्याद्गुडोगोलेक्षुपाकयोः ॥ ४१ ॥ सर्पमांसात्पशूव्याडौगोभूवाचस्त्विडाइलाः ॥

कोणमंथानयोरपि । अभिमानेग्रहेदंडश्चंडांशोःपारिपार्श्विकइत्यपिशब्दात्ज्ञेयाः । गोलोमृदादिगुडकःइक्षुपाकःइक्षुविकारः।"हस्तिसन्नाहेपिगुडः।" स्नुहीगुडिकयोर्गुडा ॥ ४१ ॥ मांसात्पशुर्व्याघ्रः । मांसमत्तीतिमांसात्सचासौपशुश्चेति । डलयोरेकत्वेनव्यालश्च । "खलेऽपिच" गौर्धेनुः । डलयोरैक्यादिडाइलाश्च इलाबुधपत्नीच ॥

वंशशलाकापंजराद्यर्थाबेणुशलाका । अपिशब्दाद्विषेपुंसि । "सिंहनादेचस्त्रियां ।" षट्क्षणमितेकालेऽपिशब्दाच्छिरादिषुचनाडी । "शिरायांगंडदूर्वायांचर्यायांकुहनस्यचेतिमेदिनी ।" ॥ ४२ ॥ दंडादिषु षट्सुकांडः । सचपुन्नपुंसकयोः । अर्वाकुत्सितः । वर्गः परिच्छेदः । यथाप्रथमकांडेऽभिहितं । अवसरःप्रस्तावः । अमत्रेपात्रे । मूलंयद्वणिकूधनंतत्रचभांडं । कांचनादिनिर्मितेऽश्वाभरणेभूषणमात्रेच ॥ ४३ ॥ इतिडांताः । भृशमत्यर्थंप्र

क्ष्वेडावंशशलाकापिनाडीनालेपिषट्क्षणे ॥ ४२ ॥ कांडोऽस्त्रीदंडबाणार्ववर्गावसरवारिषु ॥ स्याद्भांडमश्वाभरणेमत्रेमूलवणिग्धने ॥ इतिडांताः ॥ ४३ ॥ भृशप्रतिज्ञयोर्बाढंप्रगाढंभृशकृच्छ्रयोः ॥ शक्तस्थूलौत्रिषुदृढौव्यूढौविन्यस्तसंहतौ ॥ ४४ ॥ ॥ इतिढांताः ॥ भ्रूणोऽर्भकेस्त्रैणगर्भेबाणोबलिसुतेशरे ॥ कणोऽतिसूक्ष्मेधान्यांशेसंघातेप्रमथेगणः ॥ ४५ ॥

तिज्ञास्वीकारः । दृढेपिप्रगाढं । "शक्तःसमर्थः तत्रस्थूलेचदृढः । विन्यस्तेसंहतेचव्यूढः । पृथुलेच ।" इतिढांताः । स्त्रियाअयंस्त्रैणः । स्त्रैणश्चासौगर्भश्चतस्मिन् । बलिपुत्रेबाणः । "बाणःस्याद्गोस्तनेदैत्यभेदेकेवलकांडयोरितिमेदिनी ।" अतिसूक्ष्मवस्तुनिधान्यांशेचकणः । प्रमथेरुद्रानुचरे ॥ ४५ ॥

द्यूतमक्षादिभिःक्रीडा । आदिनामेषकुक्कुटादियुद्धादिकं । तत्रउत्सृष्टेन्यस्तार्थे भृतौवेतने मूल्येविक्रेयवस्तुद्रव्ये धनेकाकिणीचतुष्टयेपणः । "अपिशब्दात्ग्लहेक्रय्यशाकाद्विकायांच" मौर्वीज्यायां द्रव्याश्रितेरसगंधादौ । आदिशब्दस्यप्रत्येकंसंबंधात्सत्वरजआदौशौर्यचातुर्यादौसंधिविग्रहादौ । इंद्रियेअदेङियुक्तेचगुणः । "गुणेमौर्व्यामप्रधानेरूपादौसूदइंद्रिये ॥ त्यागेशौर्यादिसत्वादिसंध्याद्यावृत्तिरज्जुषु । शुक्लादावपिवह्व्यांचेतिमेदिनी" ॥ ४६ ॥

पणोद्यूतादिषूत्सृष्टेभृतौमूल्येधनेपिच ॥ मौर्व्यांद्रव्याश्रितेसत्वशौर्यसंध्यादिकेगुणः ॥ ४६ ॥ निर्व्यापारस्थितौकालविशेषोत्सवयोःक्षणः ॥ वर्णोद्विजादौशुक्लादौस्तुतौवर्णंतुवाऽक्षरे ॥ ४७ ॥

निर्व्यापारस्थितौतूष्णीमवस्थानेकालविशेषेमुहूर्तस्यद्वादशेभागेउत्सवेपुत्रजन्मादौक्षणः । "पर्वणिच" विप्रक्षत्रियादौशुक्लपीतादौस्तुतौस्तवेवर्णः । अक्षरेवर्णंवाक्लीबेपुंसिचेत्यर्थः । "वर्णोद्विजादिशुक्लादियशोगुणकथासुच ॥ स्तुतौनानस्त्रियांभेदरूपाक्षरविलेपनइतिमेदिनी ॥ ४७ ॥

“वर्णभेदेकपिले ।” अपिशब्दात्सूर्यसारथौ । “अव्यक्तरागेसंध्यारागेच ।” सोरुणशब्दः । “अपिशब्दात्” स्तंभादौस्थेयुषिचस्थाणुः । “अपिशब्दात्” अश्वत्थाम्नः । पितरिपरिमाणविशेषेचद्रोणः । आजौयुद्धे रवेशब्दे ॥ ४८ ॥ श्रेष्ठोमुख्यः । “ग्रामणीर्भोगिकेपत्यौप्रधानेनापितेपिचेतिविश्वप्रकाशः । मेषलोम्नि भ्रुवोरंतरावर्तै ऊर्णा” आदिनाशशोष्ट्रादीनांचलोमसाऊर्णा । सोर्णातुचक्रवर्त्यादीनांमहायोगिनांचमहापुरुषलक्षणभूताम्र



अरुणोभास्करेपिस्याद्वर्णभेदेपिचत्रिषु ॥ स्थाणुःशर्वोप्यथद्रोणःकाकेप्याजौरवेरणः ॥४८॥ ग्रामणीर्नापितेपुंसिश्रेष्ठेग्रामाधिपेत्रिषु ॥ ऊर्णामेषादिलोम्निस्यादावर्तेचांतराभ्रुवोः ॥ ४९ ॥ हरिणीस्यान्मृगीहेमप्रतिमाहरिताचया ॥ त्रिषुपांडौचहरिणःस्थूणास्तंभेपिवेश्मनः ॥ ५० ॥

णालतंतुसूक्ष्माशुभ्रायताप्रशस्तावार्ताप्रायेणभवति ॥ ४९ ॥ हेम्नःसुवर्णस्यप्रतिमायाचहरिताहरिद्वर्णा “हरिणीहरितायांचनारीभिद्वृत्तभेदयोः । सुवर्णप्रतिमायांचेतिमेदिनी ।” पांडौपांडुरवर्णेचकारान्मृगभेदे । वेश्मनोगृहस्यस्तंभेस्थूणा । अपिशब्दाल्लोहस्यप्रतिमायां ॥ ५० ॥



स्पृहावांछा । पिपासापानेच्छा । जुगुप्सानिंदा । “करुणाचघृणेत्युच्यते” वणिक्पथेपण्यवीथी । आपणेपण्येचविपणिः । सुरामद्यं । प्रत्यक्प्रतीचीदिक् । उभेवारुण्यौ । “गंडदूर्वापिवारुणी ।” ॥ ५१ ॥ इभ्यांहस्तिन्यांकरेणुःस्त्रीलिंगा । इभेहस्तिनिकरेणुर्नापुल्लिंगः । बलंपराक्रमः । गृहेरक्षितरिशरणं । “वधरक्षणयोरपिशरणं ।” चकारादग्निमंथेचश्रीपर्णं ॥ ५२ ॥ अभिमरोयुद्धं । खरेतिग्मे । “तीक्ष्णंसामुद्रलवणेविषलोहाजिमुष्कके ।

तृष्णेस्पृहापिपासेद्वेजुगुप्साकरुणेघृणे ॥ वणिक्पथेचविपणिःसुराप्रत्यक्चवारुणी ॥ ५१ ॥ करेणुरिभ्यांस्त्रीनेभेद्रविणंतुबलंधनं ॥ शरणंगृहरक्षित्रोःश्रीपर्णंकमलेपिच ॥ ५२ ॥ विषाऽभिमरलोहेषुतीक्ष्णंक्लीबेखरेत्रिषु ॥ प्रमाणंहेतुमर्यादाशास्त्रेयत्ताप्रमातृषु ॥ ५३ ॥

क्लीबंयवाग्रजेपुंसितिग्मात्मत्यागिनोस्त्रिष्वितिमेदिनी ।” हेतुर्धूमादिः । मर्यादासीमा । इयत्तापरिच्छेदः । प्रमाताज्ञाता । “प्रमाणंनित्यमर्यादाशास्त्रेषुसत्यवादिनि । इयत्तायांचहेतौचक्लीबैकत्वेप्रमातरीतिमेदिनी” ॥ ५३ ॥

साधकतमंक्रियासिद्धौप्रकृष्टोहेतुः । क्षेत्रंसस्योत्पत्तिस्थानं । करणंसाधनेक्षेत्रेइतिविश्वः । अपिशब्दात्कर्मादि । "करणंकरणेकायेसाधनेंद्रियकर्मसु । कायस्थेव्रतबंधेचनाट्यगीतप्रभेदयोः । पुमान्शूद्राविशोःपुत्रेक्लानरादौचकीर्त्यतेइत्यजयः । प्राणिनामुत्पादेजन्मनि । असंबाधचमूगतौनिर्बाधसैन्यगमनेघंटापथेचसंसरणं ॥ ५४ ॥ उन्नयेजलपात्रादेरूर्ध्वंनयने । "उन्मूलितेचउद्गिरणं ।" अतःपरंवक्ष्यमाणांतशब्दास्तेत्रिषु । पशुशृंगंचेभदंत

करणंसाधकतमंक्षेत्रगात्रेंद्रियेष्वपि ॥ प्राण्युत्पादेसंसरणमसंबाधचमूगतौ ॥ ५४ ॥ घंटापथेऽथवांतान्नेसमुद्गिरणमुन्नये ॥ अतःस्त्रिषुविषाणंस्यात्पशुशृंगेभदंतयोः ॥ ५५ ॥ प्रवणंक्रमनिम्नोर्व्यांप्रह्वेनातुचतुष्पथे ॥ संकीर्णौनिचिताशुद्धौविरिणंशून्यमूषरं ॥ ५६ ॥ ॥ सेतौचवरणोवेणीनदीभेदेकचोच्चये ॥" इतिणांताः ॥

श्वतयोः । स्त्रियांविषाणी ॥ ५५ ॥ क्रमेणनिम्नाक्रमनिम्नासाचासौउर्वीचपृथ्वी तत्रप्रह्वेनम्रेचतुष्पथे प्रवणःपुंस्येव । निचितोव्याप्तः । अशुद्धोअमित्रः । "संकीर्णंसंकटेव्याप्तेकुत्रचिद्वर्णसंकरइत्यजयः ।" शून्यंनिराश्रयोदेशः । ऊषरंस्थलभेदः । तद्विरिणमितिस्यात् । "दीर्घादिरपि । इरणमित्यपि" ॥५६ ॥ सेतौचवरणोवेणीनदीभेदोकचोच्चयइत्यमूलकः ॥ इतिणांताः ॥



अथतांतानाह । नदःसरिद्विशेषः । तार्क्ष्योगरुडः ' भासःपक्षिभेदोगोष्ठकुक्कुटाख्यः । पक्षीपक्षिमात्रं ॥ ५७ ॥ उत्पातोधूममयीतारा "ग्रहभेदेपिधूमकेतुः । जीमूतोऽद्रौधृतिकरेदेवतारेपयोधरेइतिमेदिनी ।" पाणिःकरः । नक्षत्रंत्रयोदशं । पवनोवायुरमरश्चमरुत्संज्ञौ ॥ ५८ ॥ महामात्रसारथीयंतारौ । धाताधारकः । "स्वामिन्यपिभर्ता" यानपात्रेवहित्रे । "गृहस्थानेवाससिचपोतः । प्राण्यंतरेभूतांतरे । केतुर्नारुक्पताकारियहोत्पातेषुलक्ष्मणीतिमेदिनी" ॥ ५९ ॥ पार्थिवेराज्ञितनयेपुत्रे । कारुःशिल्पीतद्भेदे । अपिशब्दात्कंचुकिनि । जीवेष्टियाजकेचस्थपतिः । भूमिधरःशैलः ॥ ६० ॥

देवसूर्यौविवस्वंतौसरस्वंतौनदार्णवौ ॥ पक्षितार्क्ष्यौगरुत्मंतौशकुंतौभासपक्षिणौ ॥ ५७ ॥ अग्न्युत्पातौधूमकेतूजीमूतौमेघपर्वतौ ॥ हस्तौतुपाणिनक्षत्रेमरुतौपवनामरौ ॥ ५८ ॥ यंताहस्तिपकेसूतेभर्ताधातरिपोष्टरि ॥ यानपात्रेशिशौपोतःप्रेतःप्राण्यंतरेमृते ॥ ५९ ॥ ग्रहभेदेध्वजेकेतुःपार्थिवेतनयेसुतः ॥ स्थपतिःकारुभेदेपिभूभृद्भूमिधरेनृपे ॥ ६० ॥ मूर्धाभिषिक्तोभूपेऽपिक्रतुःस्त्रीकुसुमेपिच ॥ विष्णावप्यजिताव्यक्तौसूतस्त्वष्टरिसारथौ ॥ ६१ ॥

"अपिशब्दात्" प्रधानेक्षत्रियमात्रेचमूर्धाभिषिक्तः । स्त्रीकुसुमेरजसि । हेमंतादौचक्रतुः । अजितश्चाव्यक्तश्चेतितकारांताविमौविष्णावपिवर्तेते । अपिशब्दादपरिभूः शंकरेचाजितः । अव्यक्तःशंकरेविष्णावव्यक्तंमहदादिके । आत्मन्यपिस्यादव्यक्तमस्फुटेत्वभिधेयवदितिविश्वः । त्वष्टरिशिल्पिभेदे । क्षत्रियाब्राह्मणीजेपिसूतःसारथिबंदिनोरितिविश्वः ॥ ६१ ॥

स्फुटेपिव्यक्तः। शास्त्रंतर्कादि । निदर्शनमुदाहरणं । इमेउभेदृष्टांतौ । द्वाःस्थेद्वारपाले । वैश्यायामित्यपपाठः। क्षत्ताशूद्रात्क्षत्रियाजेइतिविश्वकोशात्। चात्भुजिष्यातनये ॥ ६२॥ प्रकरणंप्रस्तावः।प्रकारोभावः कार्त्स्न्यंसाकल्यं। वार्ताजनश्रुतिः। नृत्यस्थानेनृत्यमंडपे। नीवृद्विशेषोजनपदविशेषः। सचपश्चिमसागरस्थोद्वारावती ॥ ६३ ॥ यमोधर्मराजः। दैवंप्राकृतनंकर्म। अकुशलकर्मपापं। श्लेष्मादयोधातुशब्दवाच्याः। आदिशब्दात्पित्तादिग्रहः।

व्यक्तःप्राज्ञेपिदृष्टांतावुभौशास्त्रनिदर्शने ॥ क्षत्तास्यात्सारथौद्वाःस्थेक्षत्रियायांचशूद्रजे॥ ६२॥ वृत्तांतःस्यात्प्रकरणेप्रकारेकार्त्स्न्यवार्तयोः॥ आनर्तःसमरेनृत्यस्थाननीवृद्विशेषयोः॥ ६३॥ कृतांतोयमसिद्धांतदैवाकुशलकर्मसु॥ श्लेष्मादिरसरक्तादिमहाभूतानितद्गुणाः॥६४॥ इंद्रियाण्यश्मविकृतिःशब्दयोनिश्चधातवः॥ कक्षांतरेपिशुद्धांतोनृपस्यासर्वगोचरे॥ ६५॥

रसआहारपरिणामजोभागविशेषः रसरक्तादीत्यादिनावसामज्जादिग्रहः । महाभूतानिपृथिव्यादीनिपंच । तद्गुणागंधादयः ॥६४॥ इंद्रियाणिचक्षुरादीनि । अश्मविकृतिः मनःशिलादि । शब्दयोनिः भूसत्तायामित्यादिः । भूवादयोधातवइतिसूत्रात् । नृपस्यकक्षांतरेराजधानीस्थानविशेषे । असर्वगोचरइतिकक्षांतरस्यविशेषणं । अपिशब्दादंतःपुरेआशौचांतेच ॥ ६५ ॥



कासूः महाराष्ट्रभाषायांसैतीतिख्यातः आयुधभेदः । कासूःशक्त्यायुधेपिचेतिविश्वात्। काठिन्यंदृढता। वल्लीलता। रात्रौगृहेचवसतिः ॥ ६६ ॥ क्षयोहानिरर्चापूजातत्रापचितिः। निष्कृतौव्ययेच। अवसानंअंतः ॥ धनुष्कोटिःचापाग्रं।"आर्तिरितिपाठः। उपसर्गादृतीतिवृद्धिः।" सामान्यंगोत्वादि। मालत्यांचजाति "जातिःसामान्यगोत्रयोः। मालत्यामामलक्यांचचुल्ल्यांकंपिल्लजन्मनोः। जातीफलेछंदसिचेतिहैमः।" ॥ ६७ ॥ प्रचारःलोकाचारइतियावत्। स्यंदःप्रस्रवणं। तत्ररीतिः। "रीतिःप्रचारेस्यंदेचलोहकिट्टारकूटयोरितिविश्वः।" डिंबेप्रवासेचईतिः। डिंबोविप्लवः। सचसप्तविधः। अतिवृष्टिरनावृष्टिः शलभामूषकाःशुकाः। स्वचक्रंपरचक्रंचसप्तैताईतयःस्मृताइतिभेदात् । उदयेउत्पत्तौ। अधिगमेलाभे। अग्नित्रये। दक्षिणगार्हपत्याहवनीयाख्ये । द्वितीयेयुगे । त्रेताशब्दआवंतः ॥६८॥ वीणाभेदोनारदीवीणा। महत्वयुक्तायांभार्यादौच अणिमादौचभूतिः।"भूतिर्भस्मनिसंपदि । मांसपाकविशेषेचजननेगजमंडनइत्यमरशेषः।"नागानांनद्यांनगर्यांचभोगवती। संगरादित्रयेसमितिः॥६९

कासूसामर्थ्ययोःशक्तिर्मूर्तिःकाठिण्यकाययोः॥ विस्तारवल्ल्योर्व्रततिर्वसतीरात्रिवेश्मनोः॥ ६६॥ क्षयार्चयोरपचितिःसातिर्दानावसानयोः॥ अर्तिःपीडाधनुष्कोट्योर्जातिःसामान्यजन्मनोः॥६७॥ प्रचारस्यंदयोरीतिरीतिर्डिंबप्रवासयोः॥ उदयेऽधिगमेप्राप्तिस्त्रेतात्वग्नित्रयेयुगे॥ ६८॥ वीणाभेदेपिमहतीभूतिर्भस्मनिसंपदि॥ नदीनगर्योर्नागानांभोगवत्यथसंगरे॥ ६९॥

वासोनिवासः । अपिशब्दान्मेदिन्यां । कालभेदेचक्षितिः । सूर्यप्रभादिषुहेतिः ॥ ७० ॥ जगतिर्लोके क्षितौभुवि छंदोविशेषेद्वादशाक्षरपादकवृत्ते जगती । “ अपिशब्दाज्जने ” दशमंछंदःदशाक्षरपादकं । आवलिरपिपंक्तिः । उत्तरकालेप्यायतिः । “ आयतिःसंयमेदैर्घ्येप्रभावागामिकालयोरितिविश्वः ।” ॥ ७१ ॥ वीरभेदेसैन्यभेदेचपत्तिः । पक्षभेदयोरितिषष्ठी । पक्षशब्दोमासार्धवाचीखगावयववाचीच अतोद्विवचनं । मासार्धस्यमूले

संगेसभायांसमितिःक्षयवासावपिक्षिती ॥ रवेर्चिश्वशस्त्रंचवन्हिज्वालाचहेतयः ॥ ७० ॥ जगतीजगतिच्छंदोविशेषेपिक्षितावपि ॥ पंक्तिश्छंदोपिदशमंस्यात्प्रभावेपिचायतिः ॥ ७१ ॥ पत्तिर्गतौचमूलेतुपक्षतिःपक्षभेदयोः ॥ प्रकृतिर्योनिलिंगेचकैशिक्याद्याश्चवृत्तयः ॥ ७२ ॥

प्रतिपदीत्यर्थः । पक्षिपक्षस्यमूलेऽधोदेशे । योनिर्लिंगेद्वंद्वैक्यं । योनौलिंगेचप्रकृतिः । चकारात्प्रधानतत्वेअमात्यादौस्वभावेच । आद्यशब्दादारभटीसात्वतीभारत्यः । चकाराज्जीविकायांसूत्रविवरणेचवृत्तिः ॥ ७२ ॥

सिकताशब्दोवालुकायांस्त्रीलिंगोबहुवचनांतश्च । अपिशब्दात्सिकतान्वितदेशेचशर्करायांचकीर्तितः । श्रवसिकर्णे “ श्रुतिःश्रोत्रेतथाम्नायेवार्तायांश्रोत्रकर्मणीतिविश्वः । ” जनितोऽत्यंतानुरागोयस्यांतस्यांयोषिन्मात्रेचवनिता । वनिताजनितात्यर्थरागयोषितियोषितीतिविश्वः ॥ ७३ ॥ क्षितिव्युदासेभूविवरे । गतार्थक्षितेरुत्खननेइतिसुभूतिः । अपिशब्दाद्रक्षणेच । गुप्तिःकारागृहेप्रोक्ताभूगर्तेरक्षणेऽधमेइतिविश्वः । तुष्टौयोगभेदे “ ध्वरे ” च

सिकताःस्युर्वालुकापिवेदेश्रवसिचश्रुतिः ॥ वनिताजनितात्यर्थानुरागायांचयोषिति ॥ ७३ ॥ गुप्तिःक्षितिव्युदासेपिधृतिर्धारणधैर्ययोः ॥ बृहतीक्षुद्रवार्ताकीछंदोभेदेमहत्यपि ॥ ७४ ॥ वासिताऽस्त्रीकरिण्योश्चवार्तावृत्तौजनश्रुतौ ॥ वार्तंफल्गुन्यरोगेचत्रिष्वप्सुचघृतामृते ॥ ७५ ॥

धृतिः । क्षुद्रवार्ताकीओषधिविशेषः । बृहतीक्षुद्रवार्ताक्यांकंटकार्यांचवाचिकेतिविश्वः । छंदोभेदोनवमंछंदोबृहती । महतीविपुला सापिबृहतीस्यात् ॥ ७४ ॥ स्त्रीकरिण्योर्योषिद्धस्तिन्योः धान्येपक्षिशब्देचवासितंक्लीबं । वृत्तौजीविकायां । जनश्रुतिर्वृत्तांतः । फल्गुन्यसारेक्लीबं रोगरहितेत्रिषु । घृतामृतेद्वे अप्सुवर्तेते । चकाराद्घृतमाज्येजलेक्लीबं । अमृतंतुघृतेपीयूषेयज्ञशेषेच ॥ ७५ ॥

रूप्यंरजतं । लक्ष्मचिन्हं । अवधृतमाकर्णितं । युगेप्रथमयुगेपर्याप्तिअलमर्थेंकृतं ॥ ७६ ॥ जीवानपेक्षिसाहसरूपंकर्ममहाभीतिर्महद्भयंअत्याहितं स्यात् । युक्तेन्याय्ये । क्ष्मादौक्षित्यादिपंचके । ऋतेसत्ये । प्राणिनिजंतौ । अतीतेवृत्ते । प्राण्यतीतइतिद्वंद्वैक्यं । समेसदृशं । भूतंक्ष्मादौपिशाचादौ न्याय्येसत्योपमानयोरितिविश्वः ॥ ७७ ॥ पद्येश्लोके । अतीतेभूतेदृढेगाढेनिस्तलेवर्तुलेऽतीतादौत्रिलिंग्यांवृत्तं । राज्यंचकारात्बृहच्चमहत् । महा

कलधौतंरूप्यहेम्नोर्निमित्तंहेतुलक्ष्मणोः ॥ श्रुतंशास्त्रावधृतयोर्युगपर्याप्तयोःकृतं ॥ ७६ ॥
अत्याहितंमहाभीतिःकर्मजीवानपेक्षिच ॥ युक्तेक्ष्मादावृतेभूतंप्राण्यतीतेसमेत्रिषु ॥ ७७ ॥
वृत्तंपद्येचरित्रेत्रिष्वतीतेदृढनिस्तले ॥ महद्राज्यंचावगीतंजन्येस्याद्गर्हितेत्रिषु ॥ ७८ ॥
श्वेतंरूप्येपिरजतंहेम्निरूप्येसितेत्रिषु ॥ त्रिष्वतोजगदिंगेपिरक्तंनील्यादिरागिच ॥ ७९ ॥

राज्येविशालेचेतिविश्वः । जन्येजनापवादेगर्हितेनिंदितेऽवगीतं ॥ ७८ ॥ अपिशब्दाच्छुभ्रेपिश्वेतं । श्वेतंरूप्येऽन्यवच्छुक्लेश्वेतोद्वीपाद्रिभेदयोरिति विश्वः । हेम्निरूप्येसितेचरजतं । अतोरजतात्परेतांताःशब्दास्त्रिषु । इंगेजंगमेभुवनेचजगत् । नील्यादिरागयुक्तं । रक्तोऽनुरक्तेनील्यादिरंजितेलोहिते त्रिषु । क्लीबंतुकुंकुमेताम्रेइतिमेदिनी ॥ ७९ ॥



सितादित्रयेऽवदातः । शुद्धंनिर्मलं । अर्जुनःशुक्लःबद्धश्चसितः । युक्तेन्याय्येअतिप्रशस्तेभूषितेवाअभिनीतः ॥ ८० ॥ कृत्रिमेघटादौ । लक्षणोपेते शास्त्रोपलक्षणयुक्तेचसंस्कृतं । अनवधौनिःसीमे । अपिशब्दाच्छेषादौ ।“अनंतःकेशवेशेषेपुमाननवधौत्रिषुइतिमेदिनी । अनंतंखेनिरवधावितिहैमः” ख्यातेप्रसिद्धेहृष्टेचप्रतीतः ।“ प्रतीतःसादरेप्राज्ञेप्रथितेज्ञातहृष्टयोरितिहैमः ।” कुलजेकुलीनेबुधेपंडितेऽभिजातः ।“ अभिजातःकुलीनेस्यान्न्याय्य

अवदातःसितेपीतेशुद्धेबद्धार्जुनौसितौ ॥ युक्तेतिसंस्कृतेमर्षिण्यभिनीतोऽथसंस्कृतं ॥ ८० ॥
कृत्रिमेलक्षणोपेतेऽप्यनंतोनवधावपि ॥ ख्यातेहृष्टेप्रतीतोभिजातस्तुकुलजेबुधे ॥ ८१ ॥
विविक्तौपूतविजनौमूर्छितौमूढसोच्छ्रयौ ॥ द्वौचाम्लपरुषौशुक्तौशितीधवलमेचकौ ॥ ८२ ॥

पंडितयोस्त्रिष्वितिमेदिनी”॥ ८१ ॥ पूतंपवित्रं । विजनोविगतजनएकांतइत्यर्थः । एतौविविक्तौ । “विविक्तंस्यादसंपृक्तेरहःपूतविवेकिष्वितिहैमः।” मूढोमोहंगतः सोच्छ्रयोवृद्धियुक्तः । द्वौमूर्छितौ । अम्लंचुक्रंत्रिरात्रिस्थं कांजिकमितियावत् । परुषोनिष्ठुरः । द्वौशुक्ताख्यौ । “ शुक्तंपूताम्लनिष्ठुरइति मेदिनी ” मेचकःकृष्णवर्णः । शिञ्निशानेइतिधातोःक्तिनिशितिः । “ शितिर्भुजेनासितासितयोस्त्रिष्वितिमेदिनी ।” ॥ ८२ ॥

धर्ममात्रेक्लीबंतद्युक्तेत्रिषुसत्। साधौमान्ये । अरात्यभियुक्तेशत्रुणाक्रांतेअग्रतःकृतेपुरःस्थिते ॥ ८३ ॥ आश्रयोनिवासः। अवातोवातवर्जितः। उभौनिवातौ। यच्छस्त्राभेद्यंवर्मकवचंतदपिनिवाताख्यं। यथा। निवातकवचोवीरः। निवातोदृढसन्नाहइत्यजयः। जातउत्पन्नः। उन्नद्धोदृप्तः प्रवृद्धश्चैतेउच्छ्रिताः। अमीवक्ष्यमाणावृद्धिमदादयउत्थिताः ॥८४॥ वृद्धिमांश्चप्रोद्यतश्चोत्पन्नश्चेति। अत्रकचित्केचित्उदास्थितेत्यादयःसंतितिऽमूलक

सत्येसाधौविद्यमानेप्रशस्तेऽभ्यर्हितेचसत्॥पुरस्कृतःपूजितेऽरात्यभियुक्तेग्रतःकृते॥ ८३॥ निवातावाश्रयावातौ शस्त्राभेद्यंचवर्मयत्॥ जातोन्नद्धप्रवृद्धास्युरुच्छ्रिताउत्थितास्त्वमी॥८४॥ वृद्धिमत्प्रोद्यतोत्पन्नाआदृतौसादरार्चितौ॥ ॥इतितांताः॥ ॥अर्थोभिधेयरैवस्तुप्रयोजननिवृत्तिषु ॥८५॥ निपानागमयोस्तीर्थमृषिजुष्टेजलेगुरौ॥

त्वादुपेक्ष्याः ॥ ॥ इतितांताः ॥ अभिधेयोवाच्यः। राःधनं। वस्तुतत्वं। निवृत्तिर्निवर्त्तनं। अत्रविषयेप्यर्थः। "अर्थोहेतौप्रयोजने। निवृत्तौविषयेवाच्येप्रकारद्रव्यवस्तुष्विितिहैमः"॥८५॥ निपानमपकूपजलाशयः। आगमोबौद्धशास्त्रादन्यच्छास्त्रं। ऋषिजुष्टेजलेऋषिभिःसेवितोदके गुरावुपाध्याये। तीर्थंशास्त्राध्वरक्षेत्रोपायनारीरजःसुच। अवतारर्षिजुष्टांबुपात्रोपाध्यायमंत्रिष्विितिमेदिनी। "निपानेत्यत्रनिदानमित्यपिपाठः निदानमुपायः" ॥



शक्तिस्थेशक्तिमति। संबद्धार्थे। यथासमर्थःपदविधिः। हितेऽनुकूले ॥ ८६ ॥क्षीणोरागोरसोस्यक्षीणरागः। वृद्धोतिवृद्धः। उभौदशमीस्थौ। दशमीस्थौनष्टबीजेस्थविरेचेतिविश्वः। पदवीमार्गः अपिशब्दात्पंक्तिरपि। आस्थानीसभा। यत्नःप्रयत्नः। सानुपर्वताग्रं। मानंपरिमाणभेदः॥ ८७॥ "शास्त्रद्रविणयोर्ग्रंथःसंस्थाधारेस्थितौमृताविित्यन्यत्।" ॥इतिथांताः॥ ॥ अभिप्रायआशयः। वशोऽधीनः। "छंदोवशेऽभिप्रायेचदृषत्पाषाणमात्रके। नि

समर्थस्त्रिषुशक्तिस्थेसंबद्धार्थेहितेपिच ॥ ८६ ॥ दशमीस्थौक्षीणरागवृद्धौवीथीपदव्यपि ॥ आस्थानीयत्नयोरास्थाप्रस्थोऽस्त्रीसानुमानयोः॥ ८७॥ "शास्त्रद्रविणयोर्ग्रंथःसंस्थाधारेस्थितौमृतौ" ॥ इतिथांताः ॥ अभिप्रायवशौछंदावब्दौजीमूतवत्सरौ॥अपवादौतुनिंदाज्ञेदायादौसुतबांधवौ॥ ८८॥पादारश्म्यंघ्रितुर्यांशाश्चंद्राग्न्यर्कास्तमोनुदः॥ निर्वादोजनवादेपिशादोजंबालशष्पयोः॥८९

ष्पेषणार्थपद्देऽपीतिहैमः" जीमूतोमेघः। वत्सरोवर्षं। "अब्दःसंवत्सरेमेघेगिरिभेदेचमुस्तकइतिविश्वः।" निंदागर्हा। आज्ञाशासनंतत्रापवादः। "अववादइत्यपिपाठः" पुत्रोज्ञातिश्चदायादौ ॥ ८८॥ रश्मिःकिरणः ।तुर्यांशश्चतुर्थभागः। पादोमूलास्त्रतुर्यांशांघ्रिषुप्रत्यंतपर्वतेइतिहैमः" तमोनुदतीतितमोनुत्। जनवादे। लोकापवादे । अपिशब्दान्निर्णीतवादे। निर्वादःस्यात्परीवादपरिनिश्चितवादयोरितिविश्वः। जंबालेकर्दमे। शष्पेबालतृणे ॥८९॥

आरावेआर्तध्वनौ। त्रातरिरक्षके दारुणेरणेभीषणेयुद्धे। अनुरागेऽनुग्रहे। प्रसन्नातायांकाव्यगुणेच "प्रसादोऽनुग्रहेकाव्यगुणस्वास्थ्यप्रसत्तिष्विितिमेदिनी।" व्यंजनेतेमनेसूपकारेचसूदः ॥ ९० ॥ गोष्ठंगोस्थानंतस्याध्यक्षेगोपालादौबृहस्पतौकृष्णेपि। दकारांतआमोदशब्दोयथाहर्षेवर्ततेअपिशब्दादतिनिर्हारिगंधेच तथामदोपिहर्षेऽपिशब्दाद्द्विगजदानरेतःसुचेत्यर्थः। प्रधानमेवप्राधान्यं। राजलिंगेछत्रादौ वृषांगेवृषावयवे ॥ ९१ ॥ संभाषासं

आरावेरुदितेत्रातर्य्याक्रंदोदारुणेरणे ॥ स्यात्प्रसादोऽनुरागेपिसूदःस्याद्व्यंजनेपिच ॥ ९० ॥ गोष्ठाध्यक्षेपिगोविंदोहर्षेप्यामोदवन्मदः॥ प्राधान्येराजलिंगेचवृषांगेकुकुदोऽस्त्रियां॥ ९१॥ स्त्रीसंविज्ज्ञानसंभाषाक्रियाकाराजिनामसु॥ धर्मेरहस्युपनिषत्स्यादृतौवत्सरेशरत्॥ ९२ ॥ पदंव्यवसितत्राणस्थानलक्ष्मांघ्रिवस्तुषु॥ गोष्पदंसेवितेमानेप्रतिष्ठाकृत्यमास्पदं॥ ९३॥

भाषणं। क्रियाकारःकर्मनियमः। आजिर्युद्धं। नामसंज्ञा। एतेषुसंकेतेच स्त्रीलिंगसंविदिति नाम। "संवित्संभाषणेज्ञानेसंयमेनाम्निनोषणे। क्रियाकारेप्रतिज्ञायांसंकेताचारयोरपीतिहैमः। स्त्रीतुसंविदुपनिषच्छरद्भिःसंबध्यते। रहस्येकांते। वेदांतेप्युपनिषत्॥ ९२ ॥ व्यवसितिर्व्यवसायः। "पदंस्थानेविभक्त्यंतेशब्देवाक्यैकवस्तुनोः। त्राणेपादेपादचिन्हेव्यवसायापदेशयोरितिहैमः।" सेवितेगोभिरेवसेवितेदेशेमानेखुरप्रमाणेगोष्पदं। प्रतिष्ठास्थानं। कृत्यंकार्यं ॥ ९३ ॥

अतःपरंवर्गसमाप्तेर्दांतास्त्रिषु। इष्टोमनोहरः। उभौस्वादू। स्वादुर्मनोज्ञेमिष्टेचेतिविश्वः। अतीक्ष्णोऽतिग्मः। कोमलोऽकठिनः। उभौमृदू। मृदुःस्यात्कोमलेस्वरेइतिविश्वः। मूढोमूर्खः। अल्पेयथामंदोदरी। अपटुरतीक्ष्णः। निर्भाग्योहीनभाग्यः। एतेमंदाः ॥ ९४॥ प्रत्यग्रोभिनवः। अप्रतिभोऽप्रगल्भः। द्वाविमौशारदौ। "प्रगल्भोधृष्टः। विशारदोबुधेधृष्टइतिहैमः।" इतिदांताः। प्रसारितभुजद्वयकुंडलंव्यामः। वटोवृक्षभेदः। द्वयंन्यग्रोधाख्यं। कायोदे

त्रिष्विष्टमधुरौस्वादूमृदूचातीक्ष्णकोमलौ ॥ मूढाल्पापटुनिर्भाग्यामंदाःस्युर्द्वौतुशारदौ ॥ ९४॥ प्रत्यग्राप्रतिभौविद्वत्सुप्रगल्भौविशारदौ॥ इतिदांताः ॥ व्यामोवटश्चन्यग्रोधावुत्सेधःकायउन्नतिः॥ ९५ ॥ पर्याहारश्चमार्गश्चविवधौवीवधौचतौ ॥ परिधिर्यज्ञियतरोःशाखायामुपसूर्यके ॥ ९६॥ बंधकंव्यसनंचेतःपीडाधिष्ठानमाधयः॥ स्युःसमर्थननीवाकनियमाश्चसमाधयः॥ ९७॥

हः। उन्नतिरुच्छ्रायः॥ ९५॥ परितआह्रियतेसौपर्याहारोध्यानादिः। मार्गःपंथाः। एतौविवधसंज्ञौचभारेप्येतौ। यज्ञियतरोःपलाशादेःशाखायांसमिधितत्रउपसूर्यकेसूर्यसमीपमंडलेपरिवेषाख्ये ॥ ९६ ॥ उत्तमर्णगृहेऋणमोचनपर्यंतंविश्वासार्थंयद्वस्तुस्थाप्यतेतद्बंधकं। व्यसनमापत्तिः। चेतःपीडामानसीव्यथा। अधिष्ठानमध्यासनं। एतेआधयः। समर्थनंचोद्यपरिहारः। नीवाकोवचनाभावः। नियमोंऽगीकारः। एतेसमाधयः ॥ ९७ ॥

दोषोत्पादनंदोषोत्पादस्तत्र प्रकृत्यादिषुप्रकृतिप्रत्ययागमादेशेषु यन्नश्वरमित्संज्ञालोपाभ्यामदर्शनशीलमक्षरंतत्र। योमुख्यंपित्रादिकमनुयातितस्मि न्शिशौ। प्रकृतस्यप्रक्रांतस्यपदनिवृत्त्यभावः। तत्रैतेषुअनुबंधः। "विधुःशशांकेकर्पूरेहृषीकेशेचराक्षसइतिविश्वः।"॥९८॥ परिच्छेदेसीम्नि। बिले गर्ते। कालेपि। विधानेकर्तव्ये दैवेप्राक्तनशुभाशुभकर्मणिब्रह्मण्यपिविधिः॥९९॥ बुधवृद्धौधांतौपंडितेपिवर्तेते। अपिशब्दाद्बुधःसौम्ये॥ वृद्धःस्थविरे

दोषोत्पादेनुबंधःस्यात्प्रकृत्यादिविनश्वरे॥ मुख्यानुयायिनिशिशौप्रकृतस्यानुवर्तने॥ ९८॥ वि
धुर्विष्णौचंद्रमसिपरिच्छेदेबिलेऽवधिः॥ विधिर्विधानेदैवेपिप्रणिधिःप्रार्थनेचरे॥ ९९ ॥ बुधवृ
द्धौपंडितेपिस्कंधःसमुदयेपिच॥देशेनदविशेषेऽब्धौसिंधुर्नासरितिस्त्रियां॥ १००॥

समुदयेसमूहे। यथा। अनलस्कंधवपुषइति। अपिशब्दात्कांडेनृपेंऽसेच। "स्कंधःप्रकांडेकायेंऽसेविज्ञानादिषुपंचसु। नृपेसमूहेव्यूहेचेतिहैमः।" देशभेदेऽब्धौसमुद्रेसिंधुशब्दःपुंसि। "इभदानेच" नदीसामान्येतुस्त्रीलिंगे॥ १००॥



विधौविधाने। प्रकारेयथाद्विविधंकिंविधमित्यादि। अपिशब्दाद्वार्धुषिकेसज्जने "चारावपि" साधुः। जायाभार्या स्नुषापुत्रस्यपत्नीतत्रस्त्रीमात्रेच वधूः। जायास्नुषयोःपार्थक्यंवर्ततइतिद्योतनायपृथक्कृतद्ग्रहणं। देवालयादियेनलिप्यतेसःलेपश्चूर्णविशेषः। सुधाप्रसादभाक्द्रव्यंसुधाविद्युत्सुधा मृतं। सुधाहिभोजनंज्ञेयंसुधाधात्रीसुधास्नुहीतिमंजरी॥ १०१॥ प्रतिज्ञास्वीकारः। तत्रयथासत्यसंधः। संप्रत्ययआदरः। स्पृहाकांक्षातत्रश्रद्धेति।

विधाविधौप्रकारेचसाधूरम्येपिचत्रिषु॥ वधूर्जायास्नुषास्त्रीचसुधालेपोमृतंस्नुही॥ १०१॥
संधाप्रतिज्ञामर्यादाश्रद्धासंप्रत्ययःस्पृहा॥ मधुमद्येपुष्परसेक्षौद्रेप्यंधंतमस्यपि॥ १०२॥
अतस्त्रिषुसमुन्नद्धौपंडितंमन्यगर्विंतौ॥ब्रह्मबंधुरधिक्षेपेनिर्देशेथावलंबितः॥ १०३॥

क्षौद्रेमाक्षिके। दैत्यचैत्रवसंतेषुद्रुभेदेचपुमान्मधुः। अक्षिहीनेप्यंधशब्दः॥ १०२॥ अतःपरेधांतवर्गपर्यंतास्त्रिषु। पंडितमात्मानंमन्यतेपंडितंमन्यः। अधिक्षेपेनिंदाप्रयोगोयथा। हेब्रह्मबंधोदुष्टोसीति। ब्रह्मबंधुरधिक्षेपेनिर्देशेचद्विजन्मनामितिविश्वः॥ १०३॥

अवलंबितःआश्रितः । अविदूरःसन्निहितः । उभाववष्टब्धौ । अपिशब्दाद्बद्धोपि ॥ इतिधांताः ॥ चित्राभानवोरश्मयोययोस्तौ । लेशेपिगंधःसंबा
धेगुह्यसंकटयोर्द्वयोः । बाधानिषेधेदुःखेचज्ञातृचांद्रिसुराबुधाः ॥ १०४ ॥ धाताचदेहश्च । नीचोहीनजातिः । पृथग्जनइतिचतुरक्षरं । "पृथक्का
र्योजनःपृथग्जनः ।" ग्रावाप्रस्तारेजलादेगिराविति विश्वः । "पत्रीश्येनेरथेकांडेखगद्रुरथिकाद्रिष्विति विश्वः ।" ॥ १०५ ॥ बर्हीमयूरः । "शिखी

अविदूरोप्यवष्टब्धःप्रसिद्धौख्यातभूषितौ ॥ इतिधांताः ॥ सूर्यवन्हीचित्रभानूभानूरश्मिदिवाक
रौ ॥ १०४ ॥ भूतात्मानौधातृदेहौमूर्खनीचौपृथग्जनौ ॥ ग्रावाणौशैलपाषाणौपत्रिणौशरपक्षि
णौ ॥ १०५ ॥ तरुशैलौशिखरिणौशिखिनौवन्हिबर्हिणौ ॥ प्रतियत्नावुभौलिप्सोपग्रहावथसादि
नौ ॥ १०६ ॥ द्वौसारथिहयारोहौवाजिनोश्वेषुपक्षिणः ॥ कुलेप्यभिजनोजन्मभूम्यामप्यथहायनाः ॥ १०७ ॥

त्वग्नौवृक्षकेतुग्रहेशरे । चूडावतिबलीवर्देमयूरेकुक्कुटेहयइति हैमः ।" लिप्सावांछा । उपग्रहअनुकूलनं । उभौप्रतियत्नौ "प्रतियत्नस्तुसंस्कारलिप्सो
पग्रहणेषुचेति मेदिनी ।" ॥ १०६ ॥ सारथिरश्वारोहश्चसादिनौ । "सादीतुरंगमारोहेनिषादिरथिनोरपीति हैमः ।" अश्वोहयः । इषुः शरःपक्षीचैते
वाजिनः । कुलेकुलमुख्येच जन्मभूम्यांजननस्थाने अभिजनःकुलेख्यातोजन्मभूम्यांकुलध्वजेइति विश्वः ॥ १०७ ॥



वर्षोब्दःअर्चीरश्मिः व्रीहिभेदश्चैतेहायनाः । प्रल्हादपुत्रेपिविरोचनः । कल्मषेपिक्लीबंवृजिनं । "वृजिनःकेशेवृजिनंभुग्नेऽघेरक्तचर्मणीति हैमः ।" अ
र्केसुरशिल्पिनिचविश्वकर्मा ॥ १०८ ॥ वर्ष्मदेहः । आत्माकलेवरेयत्नेस्वभावेपरमात्मनि । चित्तेधृतौचबुद्धौचपरव्यावर्तनेपिचेति धरणिः । शक्रइंद्रः ।
घातुकश्चासौमत्तेभश्चेति कर्मधारयः । तथावर्षुकश्चासावब्दश्चेति । घनाघनइतिचतुरक्षरंनाम ॥ १०९ ॥ मूर्तिगुणेकाठिण्येमेघेचपुंसि । मूर्तेकठिणेनिरं

वर्षार्चिर्व्रीहिभेदाश्चचंद्राग्न्यर्काविरोचनाः ॥ क्लेशेपिवृजिनोविश्वकर्मार्कसुरशिल्पिनोः ॥ १०८ ॥ आत्मायत्नोधृ
तिर्बुद्धिःस्वभावोब्रह्मवर्ष्मच ॥ शक्रोघातुकमत्तेभोवर्षुकाब्दोघनाघनः ॥ १०९ ॥ घनोमेघेमूर्तिगुणेत्रिषुमूर्तेनिरंत
रे ॥ अभिमानोर्थादिदर्पेज्ञानेप्रणयहिंसयोः ॥ ११० ॥ इनःसूर्येप्रभौराजामृगांकेक्षत्रियेनृपे ॥ वाणिन्यौनर्तकी
दूत्यौस्रवंत्यामपिवाहिनी ॥ १११ ॥

तरेसांद्रेचत्रिषु । "घनंस्यात्कांस्यतालादिवाद्यमध्यमनृत्ययोः । नामुस्ताब्ध्योघदार्ढ्येषुविस्तारे
लोहमुद्गरे । त्रिषुसांद्रेदृढेचेति मेदिनी ।" अर्थपशुकुलगुणादिभिर्योदर्पस्तस्मिन् ज्ञानेप्रणयेहिंसायांचाभिमानः ॥ ११० ॥ प्रभौनृपेचपत्यौवामृगां
कादौराजशब्दः । "राजाप्रभौचनृपतौक्षत्रियेरजनीपतौ । यक्षेशक्रेचपुंसिस्यादिति मेदिनी ।" मृगांकश्चंद्रः । "नर्तकीदूत्यौवाणिन्यौ । वाणिनीन
र्तकीमत्ताविदग्धावनितासुचेति मेदिनी ।" स्रवंत्यांनद्यांसेनायामपि ॥ १११ ॥

वज्रंकुलिशं । तडिद्विद्युत् । वंदाव्रक्षेविजातीयप्ररोहे । योषिन्मात्रेविलासिन्यामपिकामिनी । तनुःकायेत्वचिस्त्रीस्यात्रिष्वल्पेविरलेकृशइतिमेदिनी । अधोजिव्हाकागलकंठिकासासूना । अपिशब्दात्पुत्र्यांवयस्थानेपि ॥ ११२ ॥ क्रतुर्यज्ञः । तुच्छकेशून्येमंदेचवितानंत्रिषु । मंदेयथावितानभूतहृदयः केतौध्वजेउपनिमंत्रणे । निवासेपिकेतनं ॥ ११३ ॥ तत्वंचैतन्यं । तपोब्रह्मायथाब्रह्मचारीति । वेदादित्रयेब्रह्मशब्दःक्लीबे । विप्रवेधसोःपुंसि । " क्र



ह्रादिन्यौवज्रतडितौवंदायामपिकामिनी ॥ त्वगूदेहयोरपितनुःसूनाधोजिव्हिकापिच ॥ ११२ ॥ क्रतुविस्तारयोरस्त्रीवितानंत्रिषुतुच्छके ॥ मंदेथकेतनंकृत्येकेतावुपनिमंत्रणे ॥ ११३ ॥ वेदस्तत्वंतपोब्रह्मब्रह्माविप्रःप्रजापतिः ॥ उत्साहनेचहिंसायांसूचनेचापिगंधनं ॥ ११४ ॥ आतंचनंप्रतीवापजवनाप्यायनार्थकं ॥ व्यंजनंलांछनंश्मश्रुनिष्ठानावयवेष्वपि ॥ ११५ ॥ स्यात्कौलीनंलोकवादेयुद्धेपश्वहिपक्षिणां ॥ स्यादुद्यानंनिःसरणेवनभेदेप्रयोजने ॥ ११६ ॥

त्विग्योगभिदोश्च । सूचने । आशयप्रकाशनेपि ॥ ११४ ॥ प्रतीवापःक्षीरादौतक्रादेर्निक्षेपः । जवनंवेगः । आप्यायनंप्रीणनं । एतदर्थकमातंचनं । लांछनंचिन्हं । निष्ठानंतेमनं । अवयवोऽवयवभेदः । स्त्रीपुंसयोरितियावत् । एतेषुव्यंजननाम ॥ ११५ ॥ लोकवादेलोकापवादे पश्वादीनांयुद्धेच "कुलीनत्वेच" कौलीनं । निःसरणेगृहादेर्निर्गमेवनभेदेउपवनेप्रयोजनेचउद्यानंनाम ॥ ११६ ॥



"स्थानंनित्यावकाशयोः । सादृश्येसन्निवेशेचेतिहैमः ।" क्रीडायांव्यवहारेजिगीषादौदेवनं । अक्षेषुदेवनःप्रोक्तइतिविश्वः । पौरुषेउद्योगे । तंत्रंकुटुंबकृत्येस्यात्सिद्धांतेचौषधोत्तमे । सन्निविष्टस्योद्गमेरूर्ध्वीभवने । "उत्थानउद्यमेतंत्रेपौरुषेपुस्तकेरणे । प्रांगणोद्गमहर्षेपुमलरोगेपिनद्वयोरितिमेदिनी ।" ॥ ११७ ॥ प्रतिरोधेतिरस्कारे । "स्वातंत्र्यकृत्येपिव्युत्थानं ।" मारणाद्यष्टकेसैन्येमंत्रेचसाधनमितिनाम । तत्रमारणेयथापारदसाधनं । मृतसंस्कारेऽग्निदाहे । गतौगमने । द्रव्येधने । अर्थस्यधनादेर्दापने ॥ ११८ ॥ निर्वर्तनं । अर्थनिष्पादनं । उपकरणंपरिकरः । उपायइतिकेचित् । अनुव्रज्याअनुगमनं । दाने

अवकाशेस्थितौस्थानंक्रीडादावपिदेवनं ॥ उत्थानंपौरुषेतंत्रेसन्निविष्टोद्गमेपिच ॥ ११७ ॥ व्युत्थानंप्रतिरोधेचविरोधाचरणेपिच ॥ मारणेमृतसंस्कारेगतौद्रव्येऽर्थदापने ॥ ११८ ॥ निर्वर्तनोपकरणानुव्रज्यासुचसाधनं ॥ निर्यातनंवैरशुद्धौदानेन्यासार्पणेपिच ॥ ११९ ॥ व्यसनंविपदिभ्रंशेदोषेकामजकोपजे ॥ पक्ष्माक्षिलोम्निकिंजल्केतंत्वाद्यंशेप्यणीयसि ॥ १२० ॥

त्यागे । न्यासार्पणेनिक्षिप्तद्रव्यस्यअर्पणेनिर्यातनं ॥ ११९ ॥ भ्रंशेअपायेपतनेवा । दोषइत्यस्यप्रत्येकंसंबंधः । कामजदोषस्तुमृगयाद्यूतस्त्रीमद्यपानेषुप्रसक्तिः । कोपजदोषस्तुवाक्पारुष्यादिः । "व्यसनंत्वशुभेसक्तौपानस्त्रीमृगयादिषु । दैवानिष्टफलेपापेविपत्तौनिष्फलोद्यमइतिमेदिनी ।" अक्षिलोम्निचक्षुर्लोम्नि । किंजल्केकेसरे । अणीयसितंत्वाद्यंशेअल्पतरेसूत्राद्यंशे पक्ष्मेतिनांतं ॥ १२० ॥

तिथिभेदेऽष्टमीदर्शादौ क्षणेउत्सवेपर्व । " पर्वप्रस्तावोत्सवयोर्ग्रंथौविषुवदादिषु । दर्शप्रतिपत्संधौचतिथिग्रंथविशेषयोरितिहैमः । " नेत्रपिधायकचर्मपुटेअध्वनिमार्गेवर्त्म ॥ अकार्येऽकरणार्हेगुह्येउपस्थेकौपीनं ॥ " वस्त्रभेदेपि " । संगतोभार्यादिसंबंधे । रतेसुरते ॥ १२१ ॥ धीःबुद्धिः । महामात्रे । " प्रकृतौ प्रज्ञायां " चप्रधानं । बुद्धिचिन्हयोःप्रज्ञानं । " प्रसूनोवाच्यवज्जातेक्लीबंतुफलपुष्पयोरितिमेदिनी । " कुलेवंशे ॥ १२२ ॥ आव्हानमारावः । उभेक्रंदनसंज्ञे । प्रमाणमियत्ता । उभयोर्वर्ष्म । " वर्ष्मदेहप्रमाणातिसुंदराकृतिषुस्मृतमितिमेदिनी । " गृहादीनिचत्वारिधामशब्दवाच्यानि । " धा

तिथिभेदेक्षणेपर्ववर्त्मनेत्रच्छदेध्वनि ॥ अकार्यगुह्येकौपीनंमैथुनंसंगतौरते ॥ १२१ ॥ प्रधानंपरमात्माधीःप्रज्ञानंबुद्धिचिन्हयोः ॥ प्रसूनंपुष्पफलयोर्निधनंकुलनाशयोः ॥ १२२ ॥ क्रंदनेरोदनाव्हानेवर्ष्मदेहप्रमाणयोः ॥ गृहदेहत्विट्प्रभावाधामान्यथचतुष्पथे ॥ १२३ ॥ सन्निवेशेचसंस्थानंलक्ष्मचिन्हप्रधानयोः ॥ आच्छादनेसंपिधानमपवारणमित्युभे ॥ १२४ ॥

मरश्मौगृहेदेहेस्थानेजन्मप्रभावयोरितिहैमः ॥ " चतुष्पथेशृंगाटके ॥ १२३ ॥ सन्निवेशेऽवयवविभागेसंस्थानं ॥ " संस्थानंत्वाकृतौस्मृतौ ॥ चतुष्पथेसन्निवेशइतिहैमः " । " चिन्हेप्रधानेलक्ष्म । " संपिधानंतिरोधानं । अपवारणंवस्त्रादिनापरिहृतिः । उभेआच्छादनसंज्ञे । वस्त्रेप्याच्छादनं ॥ १२४ ॥

साधनेनिष्पादने । अवाप्तौलाभे । तोषणेतुष्टौ आराधनं । चक्रंरथांगं । पुरंनगरं । अध्यासनमाक्रमणं ॥ १२५ ॥ स्वजातिश्रेष्ठेरत्नं । यथास्त्रीरत्नं । मणावपि । सलिलंजलं । काननमरण्यं । उभेवने " वनंप्रस्रवणेगेहेप्रवाहेंऽभसिकाननइतिहैमः । " विरलेसांतरे । स्तोकेऽल्पे । तलिनं । " स्वच्छेच " तलप्रतिष्ठायामितिधातोरिनन् । यथातलिनंवाच्यलिंगं तथाउत्तरेपिनांतसमाप्तिपर्यंतंवाच्यलिंगाः ॥ १२६ ॥ सन्पंडितः समःसदृशः । एकश्वेतेसमानाःस्युः । एकस्मिन्नर्थेयथा । समानोदरौबंधूएकोदरावित्यर्थः । खलोदुर्जनः । सूचकःकर्णेजपः । उभौपिशुनौ । " पिशुनंकुंकुमेपिच ॥ क

आराधनंसाधनेस्यादवाप्तौतोषणेपिच ॥ अधिष्ठानंचक्रपुरप्रभावाध्यासनेष्वपि ॥ १२५ ॥ रत्नंस्वजातिश्रेष्ठेपिवनेसलिलकानने ॥ तलिनंविरलेस्तोकेवाच्यलिंगंतथोत्तरे ॥ १२६ ॥ समानाःसत्समैकेस्युःपिशुनौखलसूचकौ ॥ हीनन्यूनावूनगर्ह्यौवेगिशूरौतरस्विनौ ॥ १२७ ॥ अभिपन्नोऽपराद्धेऽभिग्रस्तेव्यापद्गतावपि ॥ इतिनांताः ॥ कलापोभूषणेबर्हतूणीरेसंहतावपि ॥ १२८ ॥

पिवक्रेचकाकेनासूचकक्रूरयोस्त्रिष्वितिमेदिनी । " ऊनोल्पः । गर्ह्योनिंद्यः । द्वावेतौहीनन्यूनशब्दवाच्यौ । वेगीवेगयुक्तः । शूरोबली ॥ १२७ ॥ अपराद्धोऽपराधवान् । अभिग्रस्तः । शत्रुणाक्रांतः । व्यापद्गतःप्राप्तविपत्कः । एतेभिन्ननामानः ॥ ॥ इतिनांताः ॥ ॥ भूषणे " अलंकारमात्रे " बर्हेमयूरपिच्छे । तूणीरेइषुधौ ॥ संहतौसमुदाये । " कांच्यांच कलापशब्दः ॥ १२८ ॥

परिच्छदः पटमंडपाद्युपकरणं । पर्याप्तिः सर्वतोवपनं । डुवपूबीजसंतानेधातुः । सलिलस्थितौजलाधारेपरीवापः । गांदोग्धीतिगोधुग्गोपालः गोष्ठाध्यक्षश्वगोपौ । "गोपोग्रामौघगोष्ठाधिकृतयोर्बल्लवेनृपइतिविश्वः ।" वृषाकपिसंज्ञौहरोविष्णुश्च । "अग्निश्च" ॥ १२९ ॥ ऊष्मोष्णं । अश्रुनेत्रोदकंचबाष्पसंज्ञं । अन्नंभोजनं । आच्छादनंवस्त्रं । एतत्द्वयंकशिपुसंज्ञं । वक्ष्यमाणमस्त्रियामितिकशिपौतल्पेचान्वीयते । अट्टोट्टालिका । दाराःस्त्री ।

परिच्छदेपरीवापःपर्युप्तौसलिलस्थितौ ॥ गोधुग्गोष्ठपतीगोपौहरविष्णूवृषाकपी ॥ १२९ ॥ बाष्पमूष्माश्रुकशिपुत्वन्नमाच्छादनंद्वयं ॥ तल्पंशय्याट्टदारेषुस्तंबेपिविटपोस्त्रियां ॥ १३० ॥ प्राप्तरूपस्वरूपाभिरूपाबुधमनोज्ञयोः ॥ भेद्यलिंगाअमीकूर्मीवीणाभेदश्चकच्छपी ॥ १३१ ॥

अत्रयथागुरुतल्पः । स्तंबेतृणादिगुच्छे । अपिशब्दाद्विस्तारशाखयोश्च । "पङ्कवेविटाधिपेपि ।" विटपः ॥ १३० ॥ अमीप्राप्तरूपादयस्त्रयःपांताभेद्यलिंगाःबुधेपंडितेमनोज्ञेमनोहरेचवर्तंते । "प्राप्तंरूपंयेनप्राप्तरूपः । स्वमेवरूपंयस्यस्वरूपः । अभिलक्ष्यंरूपमस्याभिरूपः ।" कूर्मीकमठी । वीणाभेदःसारस्वतीवीणा । द्वेकच्छपीसंज्ञे । कच्छपीवल्लकीभेदेडुलौक्षुद्रगदांतरइतिविश्वः ॥ १३१ ॥



"कुतपोमृगरोमोत्थपटेचान्होष्टमेंशकइत्यन्यत्क्वचित् ।" इतिपांताः ॥ रवर्णेराक्षरेरेकःपुंसि । यथारेकेपरेलोपः । कुत्सितेरेफोवाच्यलिंगकः । शिफाशिखायांसरितिमांसिकायांचमातरि ॥ शफंमूलेतरूणांस्याद्गवादीनांखुरेपिच ॥ गुंफःस्याद्गुंफनेबाहोरलंकारेचकीर्तितः । इतिसार्धपद्यंमूलादितरत् ॥ इतिफांताः ॥ अथबवयोःसावर्ण्यत्वात्बांतान्वांतांश्चाह । योमरणजन्मनोरंतरालेस्थितःप्राणीसोंऽतराभवसत्वः । तस्मिन् । अश्वेघोटके । दिव्यगायनेविश्वावसुप्रभृतौ । गायनमात्रेचगंधर्वः । "गंधर्वस्तुनभश्चरे । पुंस्कोकिलेगायनेचमृगभेदतुरंगमे । अंतराभवदेहेचेतिहैमः ।" ॥ १३२ ॥ नापुंसी

"कुतपोमृगरोमोत्थपटेचान्होष्टमेंशके॥" इतिपांताः॥ रवर्णेपुंसिरेफःस्यात्कुत्सितेवाच्यलिंगकः॥ इतिफांताः॥ अंतराभवसत्वेऽश्वेगंधर्वोदिव्यगायने ॥ १३२ ॥ कंबुर्नावलयेशंखेद्विजिव्हौसर्पसूचकौ॥ पूर्वोन्यलिंगःप्रागाहपुंबहुत्वेपिपूर्वजान्॥ १३३ ॥ इतिबांताः ॥ कुंभौघटेभमूर्द्धांशौडिंभौतुशिशुबालिशौ ॥ स्तंभौस्थूणाजडीभावौशंभूब्रह्मत्रिलोचनौ॥ १३४॥

त्यर्थः। गजशंबूकयोरपिकंबुः । "ग्रीवायांच" सूचकःपिशुनः । पूर्वशब्दः । प्राग्वाचीवाच्यलिंगकः । यथा । पूर्वानदी । पूर्वोग्रामः। पूर्वंवनं । यदातुपूर्वजान्पितामहादीनाहतदापुंसिबहुत्वेवर्तते । यल्लक्ष्यं । पूर्वेषामपिपूर्वजाइति । पूर्वेस्युःपूर्वजाःपूर्वेज्ञातयइतिधरणिः । प्राक्पूर्वमग्रतइतिच ॥ १३३ ॥ इतिबांताः ॥ घटःकलशः । इभस्यगजस्यमूर्द्धांशः शिरोभागः । "कुंभःस्यात्कुंभकर्णस्यसुतेवेश्यापतौघटे ॥ राशिभेदेद्विपांगेचेतिविश्वः ।" बालिशोमूर्खः । स्थूणागृहस्तंभः । जडीभावोजडत्वं । "शंभुर्ब्रह्मार्हतोःशिवइतिहैमः ।" ॥ १३४ ॥

भ्रूणोगर्भस्थोजंतुः । अर्भकःशिशुः । एतेगर्भाः । " गर्भःकुक्षौशिशौसंधौभ्रूणेपनसकंटकइतिहैमः । " प्रणयेशृंगारप्रार्थनायां । अपिशब्दाद्विश्वासा दौविस्रंभः । " विश्रंभोपि । विश्रंभःकेलिकलहेविश्वासेप्रणयेवधइतिविश्वहैमौ ॥ " दुंदुभिर्भेर्यांपुंसि । अक्षेबालक्रीडोपकरणे तितरिंगिइतिदे शांतरप्रसिद्धेस्त्रियां । " दुंदुभिःपुमान् । वरुणेदैत्यभेर्योश्चत्र्यक्षबिंदुत्रिकद्वयइतिमेदिनी । " ॥ १३५ ॥ महारजनेपुष्पभेदे येनरक्तंवस्त्रंकौसुंभं । क

कुक्षिभ्रूणार्भकागर्भाविस्रंभःप्रणयेपिच ॥ स्याद्भेर्यांदुंदुभिःपुंसिस्यादक्षेदुंदुभिःस्त्रियां॥ १३५॥
स्यान्महारजनेक्लीबंकुसुंभंकरकेपुमान् ॥ क्षत्रियेपिचनाभिर्नासुरभिर्गविचस्त्रियां ॥ १३६ ॥ स
भासंसदिसभ्येचत्रिष्वध्यक्षेपिवल्लभः॥ इतिभांताः॥ किरणप्रग्रहौरश्मीकपिभेकौप्लवंगमौ ॥ १३७॥

रकेकमंडलौ । क्षत्रियेनाभिःपुंसि । अपिशब्दान्मुख्यनृपेचक्रमध्येच । प्राण्यंगेतुद्वयोः । मृगभेदेतुस्त्रियां । गविसौरभेय्यांसुरभिःस्त्री । चकाराद्वसंत जातीफलचंपकेषुनागसुगंधिमनोज्ञयोस्त्रिषु । सुवर्णेचंपकेचक्लीबं । " ॥ १३६ ॥ संसदिसदसि । सभ्यःसदस्यः । " स्त्रियांसामाजिकेगोष्ठ्यांद्यूत मंदिरयोःसभेतिरभसः । " अपिशब्दाद्दयिते । "कुलीनाश्वे" चवल्लभः ॥ इतिभांताः । अश्वादेर्बंधनरज्जुःप्रग्रहः । रश्मिःपुमान्दीधितौस्यात्पक्ष्मप्रग्र हयोरपीतिमेदिनी ॥ १३७ ॥



मनोभवोमदनः । शौर्यंसामर्थ्यं । पुण्यादौषट्केधर्मशब्दस्तत्रयमौंतकः । न्यायेयथा । धर्माध्यक्षः । स्वभावेयथा । क्रूरधर्मा । आचारेधर्मशास्त्रोक्ते सोमंपिबतिस्मसोमपाः ॥ १३८ ॥ उपायंज्ञात्वायआरंभःसउपायपूर्वः । अमात्यशीलपरीक्षोपायउपधा । चिकित्सायांचोपक्रमः । " उपक्रमः स्यादुपधाचिकित्सारंभविक्रमइतिविश्वः । " वणिक्पथोवाणिज्यं । पुरंनगरं । वेदआम्नायः । एतेनिगमाः । " निगमोवाणिजेपुर्यांकटेवेदेवणिक्प

इच्छामनोभवौकामौशौर्येंद्योगौपराक्रमौ ॥ धर्माःपुण्ययमन्यायस्वभावाचारसोमपाः ॥ १३८ ॥
उपायपूर्वआरंभउपधाचाप्युपक्रमः ॥ वणिक्पथःपुरंवेदोनिगमोनागरोवणिक् ॥ १३९ ॥ नैगमौ
द्वौबलेरामोनीलचारुसितेत्रिषु॥ शब्दादिपूर्वोवृंदेपिग्रामःक्रांतौचविक्रमः॥ १४० ॥

थइतिमेदिनी । " नगरेभवोनागरः । बणिक्चैतौ । " द्वौ " नैगमौ " नैगमःस्यादुपनिषद्वणिजोर्नागरेपिचेतिमेदिनी । " ॥ १३९ ॥ बलेबलदेवेपुंसि। नीलादिषुत्रिलिंग्यांरामशब्दः । नीलोऽसितः । चारुःमनोज्ञः । रामःपशुविशेषेस्याज्जामदग्न्येहलायुधे ।राघवेचासितेश्वेतेमनोज्ञेपिचवाच्यवदितिको शांतरं । शब्दादिपूर्वोग्रामशब्दोवृंदेवर्तते । यथाशब्दग्रामः । अपिशब्दात्संवसथे । " स्वरेच " ग्रामः । क्रांतिर्विक्रमणं पराक्रमेचविक्रमः ॥ १४०॥

क्वचिदत्रस्तोमेत्यादिपद्यममूलकमस्ति। अपिशब्दात्स्वेदांभसिघर्मः। चेष्टालंकारोहावः। शोभायांचविभ्रमः।" १४१॥ रुकूरोगभेदःप्लीहाख्यः। स्तंबःकुशादिगुच्छोबेटइतिख्यातः। सैन्यरक्षणेचगुल्मशब्दः।" गुल्मःसेनाघट्टभिदोःसैन्यरक्षणरुग्भिदोः। स्तंबइतिमेदिनी" स्वसाभगिनी। कुलस्त्रीकुलवधूः। तयोर्जामिशब्दः।" प्रहरेसंयमेयामोयामिःस्वसृकुलस्त्रियोरितिरभसात्। यामिःकुलस्त्रीस्वस्रोःस्त्रीतिकोशांतराच्चअंतस्थादिरपि।" क्षितिर्भूमिः।क्षांतिस्तितिक्षा। तयोःक्षमा। युक्तेयोग्ये" क्षमं।" शक्तेहितेक्षमस्त्रिलिंगः।" धरणिस्तु। योग्येशक्तेहितेक्षममित्याह।"॥ १४२॥ हरित्पाला

स्तोमःस्तोत्रेऽध्वरेवृंदेजिह्मस्तुकुटिलेलसे॥ उष्णेपिघर्मश्चेष्टालंकारेभ्रांतौचविभ्रमः॥ १४१॥ गुल्मारुक्स्तंबसेनाश्चजामिःस्वसृकुलस्त्रियोः॥ क्षितिक्षांत्योःक्षमायुक्तेक्षमंशक्तेहितेत्रिषु॥ १४२॥ त्रिषुश्यामौहरित्कृष्णौश्यामास्याच्छारिवानिशा॥ ललामंपुच्छपुंड्राश्वभूषाप्राधान्यकेतुषु॥ १४३॥

शः। कृष्णःकालः। उभौश्यामौ।शारिवाशतावरीनिशाचश्यामा।" श्यामोवटेप्रयागस्यवारिदेवृद्धदारके। पिकेचकृष्णहरितोःपुंसिस्यात्तद्वतित्रिषु। मरीचेसिंधुलवणेक्लीबंस्त्रीशारिवौषधौ।अप्रसूतांगनायांचप्रियंगावपिचोच्यते। यमुनायांत्रियामायांकृष्णत्रिवृतिकौषधौ। नीलिकायामितिमेदिनी।" पुंड्रमश्वादीनांललाटचित्रं। अश्वोघोटकः।" भूषा। सामीप्यादश्वस्यैव।" प्रधानमेवप्राधान्यं। केतुर्ध्वजः। षट्सुललामं।" ललामेत्यपि। प्रधानध्वजशृंगेषुपुंड्रवालधिलक्ष्मसु॥ भूषावाजिप्रभावेषुललामंस्याल्ललामचेतिरुद्रः।"॥ १४३॥



अध्यात्मंआत्मन्यधिकृतंलिंगदेहं। अपिशब्दात्कैतवे। सूक्ष्मंस्यात्कैतवेऽध्यात्मेपुंस्यणौत्रिषुचाल्पकइतिमेदिनी। आद्येआदौप्रधानेमुख्येप्रथमः। त्रिष्वितियावन्मांतमधिकारः। प्रतीपोविपरीतः। वल्गुर्यथा। वामलोचनाःस्त्रियः।" वामःकामेसव्येपयोधरे। उमानाथेप्रतीकूलेचारौवामातुयोषितीतिहैमः।" न्यूनश्चकुत्सितश्चाधमौ॥ १४४॥जीर्णंप्राप्तपरिणामं। परिभुक्तंभुक्तोज्झितं। द्वयंयातयामसंज्ञं॥ इतिमांताः। अश्वगरुडौताक्ष्र्यसंज्ञौ।

सूक्ष्ममध्यात्ममप्याद्येप्रधानेप्रथमस्त्रिषु॥ वामौवल्गुप्रतीपौद्वावधमौन्यूनकुत्सितौ॥ १४४॥ जीर्णंचपरिभुक्तंचयातयाममिदंद्वयं॥ ॥इतिमांताः॥ ॥ तुरंगगरुडौताक्ष्यौनिलयापचयौक्षयौ॥ श्वशुर्यौदेवरश्यालौभ्रातृव्यौभ्रातृजद्विषौ॥ १४५॥ पर्जन्यौरसदब्देंद्रौस्यादर्यःस्वामिवैश्ययोः॥ तिष्यःपुष्येकलियुगेपर्यायोवसरेक्रमे॥ १४६॥

" ताक्ष्र्यस्तुस्यंदनेवाहेगरुडेगरुडाग्रजे॥ अश्वकर्णाव्हयतरौस्यादितिहैमः।" निलयोगृहं। अपचयोन्हासः। उभौक्षयौ।" क्षयोगेहेकल्पांतेऽपचयेरुजीतिहैमः।" श्यालोभार्याभ्राता। श्वशुरस्यापत्यंश्वशुर्यः। भ्रातृपुत्रःशत्रुपुत्रश्चभ्रातृव्यौ॥ १४५॥रसदब्दोध्वनदंबुदः। इंद्रःशक्रः। उभौपर्जन्यौ।" मेघशब्देपिपर्जन्यः।" प्रभुवैश्ययोरर्यः। पुष्यर्क्षेतुर्ययुगेचतिष्यः। अवसरेप्रस्तावे।" पर्यायस्तुप्रकारेस्यान्निर्माणेऽवसरेक्रमइतिविश्वः"॥ १४६॥

अधीनादिषुसमसुप्रत्ययशब्दस्तत्राऽधीनेयथा । राजप्रत्ययाःप्रजाः । शपथःशपनं । ज्ञानेयथा । प्रत्यक्षप्रत्ययः । विश्वासेयथा । नशत्रोःप्रत्ययंग च्छेत् । हेतौयथा । गार्हस्थ्यंभार्याप्रत्ययं । रंध्रेछिद्रे । शब्देयथा । चिकीर्षतीत्यत्रसन्प्रत्ययः । " प्रत्ययःशपथेरंध्रेविश्वासाचारहेतुषु ॥ प्रथितत्वेच सन्नादावधीनज्ञानयोरपीतिविश्वः । " चिरद्वेषेपश्चात्तापेचानुशयः । " अनुबंधेच " ॥१४७॥ असाकल्येऽकात्स्न्र्ये । नागानांहस्तिनांयन्नशीघ्रंना पिमंदंगमनंतन्नेत्यर्थः । स्थूलोच्चयोगंडोपलेऽपिच । गजानांमध्यमेगतेप्यसाकल्यकरंडयोरितिमेदिनी । " शपथादयःसमयाः । तत्रशपथेयथा । कृ

प्रत्ययोधीनशपथज्ञानविश्वासहेतुषु ॥ रंध्रेशब्देऽथानुशयोदीर्घद्वेषानुतापयोः ॥ १४७ ॥ स्थूलो च्चयस्त्वसाकल्येनागानांमध्यमेगते ॥ समयाःशपथाचारकालसिद्धांतसंविदः ॥ १४८ ॥ व्यस नान्यशुभंदैवंविपदित्यनयास्त्रयः ॥ अत्ययोऽतिक्रमेकृच्छ्रेदोषेदंडेप्यथापदि ॥ १४९ ॥

तसमयोपिचोरोदंड्यः । संवित्संभाषा । " समयःशपथेभाषासंपदोःकालसंविदोः । सिद्धांताचारसंकेतनियमावसरेषुच । क्रियाकारेनिर्देशेचेतिहैमः " ॥ १४८ ॥ व्यसनानिद्यूतादीनि । अशुभमितिदैवविशेषणं । विपद्विपत्तिरेतत्त्रयंअनयसंज्ञं । अशुभंदैवेयथा । निःस्वोभूदनयेनसः । अतिक्रमेउ ल्लंघने । " अपिशब्दात्नाशेचात्ययः । " आपदादित्रयेसंपरायः ॥ १४९ ॥



आयतिःउत्तरकालः । अपिशब्दात्पूजार्हेपिपूज्यः । सेनायाःपृष्ठभागेतिष्ठतियत्सैन्यंतत्पश्चादवस्थायिबलं । समवायःसमूहः । उभौसन्नायौ ॥१५० सन्निवेशेस्थानविशेषे " विस्तृतौचसंस्त्यायः । " अमीविस्रंभादयस्त्रयःप्रणयाः । विस्रंभोविश्वासः । "प्रसरश्चप्रणयः " वैरोन्नत्योःसमुच्छ्रयइतिर भसः ॥ १५१ ॥ यस्यमत्स्यादेर्योजलादिर्ज्ञातोनित्यसेवितस्तस्यतत्रविषयः । शब्दादिकाःशब्दस्पर्शरूपरसगंधाश्चविषयाः । देशगोचरौविषयौ ॥

युद्धायत्योःसंपरायःपूज्यस्तुश्वशुरेपिच ॥ पश्चादवस्थायिबलंसमवायश्चसन्नयौ ॥ १५० ॥ सं घातेसन्निवेशेचसंस्त्यायःप्रणयास्त्वमी ॥ विस्रंभयाञ्चाप्रेमाणोविरोधेपिसमुच्छ्रयः ॥ १५१ ॥ विषयोयस्ययोज्ञातस्तत्रशब्दादिकेष्वपि ॥ निर्यासेपिकषायोऽस्त्रीसभायांचप्रतिश्रयः ॥ १५२ ॥ प्रायोभूम्न्यंतगमनेमन्युर्दैन्येक्रतौक्रुधि ॥ रहस्योपस्थयोर्गुह्यंसत्यंशपथतथ्ययोः ॥ १५३ ॥

निर्यासःक्काथरसः । अपिशब्दाद्विलेपनादौ । कषायोरसभेदेस्यादंगरागेविलेपनइतिविश्वः । आश्रये । " अभ्युपगमे " चप्रतिश्रयः ॥ १५२ ॥ भू म्निबाहुल्ये ॥ यथाप्रायेणब्राह्मणाभोज्याः ॥ बाहुल्येनेत्यर्थः ॥ अंतोनाशोगम्यतेऽनेनतत्रानशनेयथा । प्रायोपवेशःकृतः । प्रायश्चानशनेमृत्यौतुल्य बाहुल्ययोरपीतिविश्वः ॥ क्रतौयज्ञेकोपेचमन्युः ॥ " शोकेच " रहस्यंगोप्यं । तथ्यमृतं । " कृतयुगेचसत्यं । " ॥ १५३ ॥

समंततः । परितः । सर्वतः । विष्वक् । चत्वारिसर्वतइत्यर्थे । "समंततोवर्षतिमेघः । आयांतिपरितःश्रियः । सर्वतोवातिपवनः । विष्वक्पतंतिकिरणाः ।" अकामानुमतौअनिच्छयानुमतौकाममित्येकं । "त्वंहनिष्यसिचेत्कामं । कामंप्रकामेनुमतावसूयानुगमेपिचेतिहैमविश्वप्रकाशौ ।" असूयापूर्वकस्वीकारेअस्त्वित्येकं । "यथा । तथाविधस्तावदशेषमस्तुनः ।" चकारात्काममित्यपि । "अस्तुस्यादभ्यनुज्ञानेऽसूयांगीकारयोरपीतिमेदिनी।" ॥ १३ ॥ नन्वित्येकंविरोधोक्तौ । "यथाननुएवंमन्यसेतर्हिकिमपिनस्यात् ।" कच्चिदित्येकंकामप्रवेदनेइष्टपरिप्रश्ने । इच्छायाआख्यानेवा । यथा ।

समंततस्तुपरितःसर्वतोविष्वगित्यपि॥अकामानुमतौकाममसूयोपगमेऽस्तुच॥१३॥ननुचस्याद्विरोधोक्तौकच्चित्कामप्रवेदने॥ निःषमंदुःषमंगर्ह्येयथास्वंतुयथातथं ॥१४॥ मृषामिथ्याचवितथेयथार्थंतुयथायथं॥ स्युरेवंतुपुनर्वैवेत्यवधारणवाचकाः॥१५॥

कच्चिज्जीवतिमेमाता । निःषमं । दुःषमं । द्वेनिंद्ये । "यथा । निःषमंवक्तिमेमूर्खः । दुःषमंवर्ततेवधूः ।" यथास्वं । यथायथं । द्वेयथायोग्यमित्यर्थे ।"यथास्वमाश्रमेचके । यथायथंफलायंते ।"॥१४॥ मृषा । मिथ्या । द्वेवितथेऽसत्ये । "उच्छ्रायसौंदर्यगुणामृषोद्याः। मिथ्योक्तंत्वया ।" यथार्थं । यथातथं । द्वयंसत्ये ।"यथा । यथार्थमुक्तंनान्यत् । गुरुर्यथातथंवक्ति । तथाशब्दस्तथशब्दोवासत्यार्थः।"एवं । तु । पुनः।वै ।वा।पंचनिश्चयार्थकाःस्युः।"यथा । एवमेवयथाप्राह । रावणंतुदुरात्मानमवधीद्राघवःप्रभुः। पुनर्व्यासोवैधर्मज्ञः।" वैवेत्यत्रवाएवेतिवाछेदः॥१५॥



प्रागित्येकंअतीतार्थकं यथाप्राक्कर्म । नूनं । अवश्यं । द्वयंनिश्चिते । नूनंशरणंप्रपन्ना । अवश्यंयातारःश्चिरतरमुषित्वापिविषयाः ।" नूनंनिश्चिततर्कयोरितिविश्वः । संवदित्येकंवर्षे । यथा । प्रभवाख्यासंवत् । अर्वागित्येकंअवरे । "कुलेक्रतुत्रयादर्वाक्मंडनान्नतुमुंडनं ।" आं । एवं । द्वयंअंगीकारे । यथा । आंकुर्मः । "एवंकुर्मः ।" स्वयमित्येकंआत्मनेत्यर्थे ॥ १६ ॥ नीचैरित्येकमल्पे । "तथापिनीचैर्विनयाददृश्यत ।" उच्चैरित्ये

प्रागतीतार्थकंनूनमवश्यंनिश्चयेद्वयं ॥ संवद्वर्षेऽवरेत्वर्वागामेवंस्वयमात्मना ॥ १६॥
अल्पेनीचैर्महत्युच्चैःप्रायोभूम्न्यद्रुतेशनैः॥ सनानित्येबहिर्बाह्येस्मातीतेऽस्तमदर्शने॥१७ ॥

कंमहति । "यथाशृंगारमुच्चैर्गिरेरिदं ।" प्रायइतिभूम्निबाहुल्ये । यथा । प्रायोनववधूःकांतं । शनैरिति अद्रुतेमांद्ये । यथा । शनैर्यातिपिपीलिका । सनेत्येकंनित्ये । यथासनातनः । बहिरितिबाह्ये । "यथा । निष्कासितोबहिर्ग्रामात् ।" स्मेत्यतीते । यथा । वक्तिस्मव्यासः । अस्तमितिदर्शनाभावे । यथा । सायमस्तमितोरविः ॥ १७ ॥

अस्तीतिसत्वे । यथा । अस्तिपरलोकइतिमतिर्यस्यसआस्तिकः । "रुषोक्तौकोपेनोक्तौउ । यथा । उआगतःशत्रुः । उसंबोधनरोषोक्त्योरनुकंपा नियोगयोः । पादपूरणेच । पादपूरणेऽपिचदृश्यतइतिमेदिनी ।" ऊमितिप्रश्ने । ऊंगच्छसिबहिर्धव । ऋस्वपाठेउमित्यपि ।" अयीत्यनुनयेसांत्व ने । "यथा । अयिक्रियार्थंसुलभंसमित्कुशं ।" हुमितितर्के । "स्याच्चेत्किंहुंप्रपद्यते ।" उषेतिरात्रेरवसाने । यथाउषातनोवायुः । नमःप्रणामे

अस्तिसत्वेरुषोक्तावुऊंप्रश्नेऽनुनयेत्वयि ॥ हुंतर्केस्यादुषारात्रेरवसानेनमोनतौ ॥ १८ ॥
पुनरर्थेंगनिंदायांदुष्ठुसुष्ठुप्रसंशने ॥ सायंसायेप्रगेप्रातःप्रभातेनिकषांतिके ॥ १९ ॥



"नमोब्रह्मण्यदेवाय ।" ॥ १८ ॥ अंगेतिपुनरर्थे । यथामूर्खोपिनावमन्यतेकिमंगविद्वान् । किंपुनरित्यर्थः । दुष्ठुनिंदायां । यथा । दुष्ठुखलत्वं । सुष्ठुप्रशंसने । यथा । सुष्ठुकाव्यं । सायमितिसायेदिनांतरे । यथा । सायंसंध्यामुपासिष्ये । प्रगे । प्रातः । द्वेप्रभाते । "यथा प्रगेनृपाणामथतोरणा द्वहिः । यःपठेत्प्रातरुत्थाय" निकषेतिसमीपार्थे ॥ १९ ॥

पूर्वेब्देगतेवर्षेपरुदित्येकं । पूर्वतरेगतवर्षात्पूर्ववर्षेपरारीत्येकं । यतिवर्तमानेब्देऐषमइत्येकं । त्रयाणांयथा । परारिगतःकांतः परुन्नागतऐषमोपिनाग तः ।" यतीतिशत्रंतस्येणःसप्तम्यांरूपं । अत्राह्निअस्मिन्नहनीत्यर्थेअद्यशब्दः । "यथा । अद्यगंतुंनशक्नोमि" अथपूर्वेन्हीत्यादिशब्देनउत्तरेन्ही त्यादिपद्कस्यग्रहणं । पूर्वेन्हीत्याद्यर्थेपूर्वादिशब्देभ्यएद्युसुप्रत्ययेपूर्वेद्युरित्यादयःसप्तशब्दाभवंति । क्रमेणयथा । पूर्वस्मिन्नहनीत्यर्थेपूर्वेद्युः । पूर्वेद्युरि

परुत्परार्यैषमोऽब्देपूर्वेपूर्वतरेयति ॥ अद्यात्रान्ह्यथपूर्वेन्हीत्यादौपूर्वोत्तरापरात् ॥ २० ॥

ष्यतेप्रातःपूर्वेद्युःपूर्ववासरइतिरुद्रः ।" उत्तरस्मिन्नहनिउत्तरेद्युः । "नांदीमुखाउत्तरेद्युर्विवाहःपरिकीर्तितः ।" अपरस्मिन्नहनिअपरेद्युः । "आगतान परेद्युस्तान् ।" अधरस्मिन्नहनिअधरेद्युः । "अधरेद्युःप्रसूतासा । अधरस्तुपुमानोष्ठेहीनेऽनूर्ध्वेचवाच्यवत् ।" अन्यस्मिन्नहनिअन्येद्युः । "अन्येद्युरा त्मानुचरस्यभावं ।" अन्यतरस्मिन्नहनिअन्यतरेद्युः । "अन्यतरेद्युःपितरंद्रक्ष्यसि ।" इतरस्मिन्नहनीतरेद्युः । "कष्टदिनादितरेद्युःप्रियोद्रष्टव्यः ॥ २० ॥

उभयेद्युः । उभयद्युः । द्वेउभयस्मिन्नहनीत्यर्थे “उभयद्युरुपोषणं ।” परेद्यवीत्येकंपरेहनि । “मित्रंदृष्टंपरेद्यवि” ॥ २१ ॥ ह्यइत्येकंगतेहनि । “ह्यःसर्वमभवत्कार्यं” श्वइत्येकमनागते आगामिन्यहनि । ततःपरेहनिपरश्वइत्येकं । “श्वःपरश्वश्चयथा । अद्यश्वोवापरश्वोवासर्वंकर्मभविष्यति ।”

तथाधरान्यान्यतरेतरात्पूर्वेद्युरादयः ॥ उभयद्युश्चोभयेद्युःपरेत्वन्हिपरेद्यवि ॥ २१ ॥
ह्योगतेऽनागतेऽन्हिश्वःपरश्वस्तुपरेहनि ॥ तदातदानींयुगपदेकदासर्वदासदा ॥ २२ ॥

तदा । तदानीं । द्वेतस्मिन्कालइत्यर्थे । “यथा । तदाचक्षुष्मतांप्रीतिः । यदास्याप्रिययासंगस्तदानीमेवमेसुखं ।” युगपत् । एकदा । एकस्मिन्काल इत्यर्थे । “यथा । शत्रुमित्रोदासीनाःयुगपदाहूताः । गवांशतमेकदादत्तं ।” सर्वदा । सदा । द्वे “सर्वदासर्वदासीतियाचतेयाचकःसदा ।” ॥ २२ ॥



एतर्हि । संप्रति । इदानीं । अधुना । सांप्रतं । पंचकमस्मिन्कालइत्यर्थे । यथा । एतर्हिक्रियतेकार्यं । संप्रत्यसौगृहंयाति । इदानीमस्मिसंवृत्तः । बलाव लेपादधुना । तत्रास्तेसांप्रतंमुनिः ।” तथेतिसमुच्चये । पूर्वादौदिशि । पूर्वादौदेशे । पूर्वादौकालेवाप्रागादयःस्युः । “दिशिप्राग्दिगित्यादि । देशेप्राग्देशइत्या दि । कालेप्राक्कालइत्यादि । ”पूर्वादौइत्यादिशब्देनोत्तरपश्चिमदक्षिणाधरोर्ध्वादीनांग्रहणं । प्रत्यगादयइत्यादिशब्देनत्ववागित्यादिग्रहः । “उत्तरात् । अधरात् । दक्षिणात् । उत्तरेण । अधरेण । दक्षिणेन । दक्षिणा । दक्षिणाहि । दक्षिणतः । उत्तरतश्चसंगृह्यते ।” ऊर्ध्वेतूपरिउपरिष्टादिति ॥ २३ ॥ इत्यव्य

एतर्हिसंप्रतीदानीमधुनासांप्रतंतथा ॥ दिग्देशकालेपूर्वादौप्रागुदक्प्रत्यगादयः ॥ २३ ॥ इत्यव्ययवर्गः ॥
सलिंगशास्त्रैःसन्नादिकृत्तद्धितसमासजैः ॥ अनुक्तैःसंग्रहेलिंगंसंकीर्णवदिहोन्नयेत् ॥ १ ॥

यवर्गः ॥ अथलिंगसंग्रहवर्गमाह ॥ सलिंगशास्त्रैःपाणिन्याद्युक्तलिंगानुशासनसहितैःसन्नादिप्रत्ययजैश्चिकीर्षादिशब्दैःकृज्जैःश्वपाकादिभिःतद्धितप्रत्ययजैः अणाद्यंतैःसमासजैरदंतोत्तरपदोद्विगुरित्यादिनोक्तैःबाहुल्येनपूर्वमनुक्तैःशब्दैरयंसंग्रहःक्रियतइतिशेषः । इहास्मिन्संग्रहवर्गेलिंगमुन्नयेदूहेत् । कथमित्याकांक्षायांसंकीर्णवदिति । यथासंकीर्णवर्गेप्रकृत्यादिभिरुन्नेयंतथात्राप्युन्नयेत् । तत्रप्रकृत्यर्थेनयथा । अर्धर्चाःपुंसिचेति । प्रत्ययार्थेनयथा । स्त्रियांक्तिन् । प्रकृतिप्रत्ययार्थाद्यैरित्याद्यशब्दात्क्रियाविशेषणानांनपुंसकत्वंएकत्वंचयथा । शोभनंपचतीत्यादि ॥ १ ॥

सन्नादिकृत्तद्धितसमासजविषयंपूर्वोक्तशब्दलिंगादन्यल्लिंगंलिंगशेषः। तस्यविधिः व्यापीस्वविषयस्यव्यापकोभवति। यद्रिप्रागुक्तैरिहोक्तैश्चविशेष विधिभिःनबाधितःस्यात्। तर्ह्येवव्यापीभवेदित्यर्थः। एतेनास्यलिंगविशेषविधेरुत्सर्गभूतस्यस्वर्गादिवर्गाअपवादावेदितव्याः। तत्रप्रागुक्तानांविशे षाणांपुनरुक्तिदोषप्रसंगाद्विस्तरभयाच्चनपुनरिहविधानं। तथाहि। स्वर्गपर्यायइहपुंसिवक्ष्यते। तस्यद्योदिवौद्वेस्त्रियांक्लीबेत्रिविष्टपमितिपूर्वोक्तमप वादः। नीप्रभृतीनांतुकृतःकर्तरीत्यादिनावक्ष्यते। यद्यपिपूर्वलिंगमुक्तं तथाप्यप्राप्तप्रापणार्थतयालिंगानुशासनमिहापिप्रधानमेव। स्त्रियामित्यधिका

**लिंगशेषविधिर्व्यापीविशेषैर्यद्यबाधितः॥ स्त्रियामीदूद्विरामैकाच्सयोनिप्राणिनामच॥ २॥**

रोयंमसीशब्दपर्यंतंज्ञेयः। ईदूतौईकारोकारौविरामौअवसानस्थौयस्यतदीदूद्विरामंतच्चतदेकाच्चईदूद्विरामैकाच्। ईदंतमूदंतंवायदेकस्वरंशब्दरूपंत त्स्त्रियामित्यर्थः। यथा। धीः। श्रीः। भूः। भ्रूः। नयतीतिनीरित्यादौकृतःकर्तरीतिबाधितत्वाद्वाच्यलिंगत्वं। योनिर्भगंतत्सहितानांप्राणिनांनामस्त्रि यां। यथा। मातादुहिताधेनुरित्यादि। दारशब्दादौतुदाराःपुंभूम्नीतिबाधकंप्रागुक्तं। कलत्रशब्दस्य। कलत्रंश्रोणिभार्ययोरितिक्लीबपाठोबाधकः। एवमुन्नेयमन्यत्रापि॥ २॥



विद्युदादिद्ल्हीपर्यंतानांअष्टानांयन्नामतत्स्त्रियां। यथा। विद्युत् तडित्। रात्रिःरजनिः। वल्ली व्रततिः वीरुत्। वीणाविपंचीत्यादि। "वीणादिग्भूनदी धियामितिपाठःक्वचित्।" अदंतैर्मूलादिशब्दैर्यएकार्थःसमाहारार्थोद्विगुसमासःसस्त्रियांस्यात्। यथा। पंचानांमूलानांसमाहारःपंचमूली। एवंत्रि लोकीषडध्यायीत्यादि। अदंतैरितिकिं। पंचानांकुमारीणांसमाहारःपंचकुमारि। पंचराजमित्यादौटचिअदंतत्वेसत्यपिपात्रादित्वान्नपुंसकत्वमित्ये के। एकार्थइतिकिं। पंचसुकपालेषुसंस्कृतःपुरोडाशःपंचकपालः। नसइति। पात्रयुगाद्युत्तरपदैःअदंतैःएकार्थोद्विगुः स्त्रियांनस्याद्यथा। पंचपात्रं। चतुर्युगं। त्रिभुवनं॥३॥ तल्प्रत्ययःस्त्रियांसतुभावाद्यर्थेविहितः। तत्रभावेयथा। शुक्लता। कर्मणिब्राह्मणता। समूहेग्रामता। स्वार्थेदेवता। द्वंदइति।

**नामविद्युन्निशावल्लीवीणादिग्भूनदीह्रियां॥ अदंतैर्द्विगुरेकार्थोनसपात्रयुगादिभिः॥३॥ तल्वृंदेयेनिकठ्यत्रावै रमैथुनिकादिवुन्॥**

द्वंदेसमूहेयइनिकठ्यत्रएतेचत्वारःप्रत्ययाःस्त्रियां। यथा। पाशादिभ्योयः। पाशानांसमूहःपाश्या। वात्या। खला दिभ्यइनिः। खलिनी। पद्मिनी। रथादिभ्यःकठ्यच्। रथकठ्या। एवंगोत्रा। द्वंदेकिं। मुखेभवोमुख्यः। दंडोस्त्यस्यदंडी। वैरेति। मिथुनस्यकर्ममैथु निका। वैरमैथुनादौचयोवुन्प्रत्ययःसस्त्रियां। तत्रवैरेविरोधार्थेयथा। अश्वमहिषिका। अश्वमहिषस्येदंवैरमित्यर्थः। एवंकाकोलूकिका। मैथुनि कायांयथा। अत्रिभरद्वाजिका। अत्रिभरद्वाजयोरियंमैथुनिका। विवाहरूपसंबंधइत्यर्थः। एवंकुत्सश्चकुशिकाश्चतयोर्मैथुनिकाकुत्सकुशिकि का। "वुन्ग्रहणंवुञउपलक्षणं। यथाकाशिका गार्गिकयाश्लाघते। क्वचित्वैरमैथुनिकादिवुरितिपाठः।" आदिनावीप्सादौवुनोग्रहणं।

स्त्रियांभावादिःस्त्रीभावादिस्तस्मिन् । स्त्रियामित्यधिकृत्यभावादौयेविहिताःप्रत्ययाअनिक्तिन्नादयस्तेस्त्रियांस्युरित्यर्थः । अनिर्यथा । आक्रोशेनञ्य निः अकरणिः । अजीवनिः । क्तिन्यथा । कृतिः । गतिः । ण्वुल्यथा । प्रच्छर्दिका । प्रवाहिका । आसिका । णच्यथा । व्यावक्रोशी । ण्वुच्य था । शायिका । इक्षुभक्षिका । क्यप्यथा । व्रज्या । इज्या । " स्त्रीभावादौकिं । वदःसुपिक्यप्च । मृषोद्यं । ब्रह्मभूयं ।" युच्यथा । कारणा । आसना । इञ्यथा । वापिः । वासिः । कांकारिमकार्षीः । इञउपलक्षणार्थत्वादिण्इक्चयथा । आजिः । कृषिः । अङ्यथा । पचा । त्रपा । भिदा । निर्यथा । ग्ला निः । म्लानिः । हानिः । शप्रत्ययोयथा । क्रिया । इच्छा ॥ ४॥ उणादिषुयेनिःऊः ईः । एतेत्रयःस्त्रियांस्युः । तत्रन्यंतोयथा । श्रेणिः । "श्रोणिः । द्रोणिः ।

**स्त्रीभावादावनिक्तिण्ण्वुल्णच्ण्वुच्क्यब्युजिञङ्निशाः॥४॥उणादिषुनिरूरीश्चङ्याबूङंतंचलंस्थिरं॥ तत्क्रीडा यांप्रहरणंचेन्मौष्टापाल्लवाणदिक्॥५॥**

उणादिष्वनिरितिपाठेअनिर्यथा । धरणिः । धमनिः । सरणिः ।" ऊदंतोयथा । चमूः । कर्षूः । ईदंतोयथा । तंत्रीः । " तरीः ।" ङ्यंतंआबंतंऊङंतंचयच्चलंजंगमंस्थिरंस्थावरंवातत्स्त्रियांस्यात् । जंगमंयथा । नारी । शिवा । ब्रह्मवधूः । स्थावरंयथा । कदली । माला । कर्कंधूः । तच्छब्देनाऽत्रमुष्ट्यादिकंनिर्दिश्यते । तेनायमर्थः । तन्मुष्ट्यादिकंप्रहरणंयदिक्रीडायांवर्ततेतर्हितस्मिन्नर्थेविहितोणप्रत्ययः स्त्रियां । दिगित्यनेनोक्तोदाहरणोद्देशः । तेनदांडामौसलेतिचोदाहर्तव्यं । मुष्टिःप्रहरणमस्यांक्रीडायांमौष्टा । पल्लवःप्रहरणमस्यांक्रीडायांपाल्लवा ॥ ५ ॥

साघञंतवाच्यादंडपातादिक्रियाऽस्यांफाल्गुन्यादिकायामित्यर्थेघञंताद्विहितोयोञप्रत्ययः सस्त्रियांस्यात् । उदाहरति । दंडपातोऽस्यांफाल्गुन्यांदांडपा ताफाल्गुनी । एवंश्येनपातोस्यांश्यैनंपातामृगया । तिलपातोऽस्यांस्वधाक्रियायांतैलंपाता । श्येनतिलस्येतिमुम् । पितृदानेस्वधामतमित्यमरमाला । व ररुचिनातुस्वधाक्रियाप्रवेणीतिस्त्रीलिंगतोक्ता ।" इतिशब्देनमुसलपातोऽस्यांमौसलपाताभूमिरित्यादिसिद्धिः । क्वचिद्देशेफाल्गुनपौर्णमास्यांदंडपा तेनक्रीडाभवतीतिदिगित्यनेनदांडपातादिकंउदाहरणमितिसूचितं ॥६॥ यदिअपचयेऽल्पत्वेविवक्षावक्तुमिच्छास्यात्तर्हिमृणाल्यादयःस्त्रीलिंगाःस्युः ।

**घञोयःसाक्रियास्यांचेद्दांडपाताहिफाल्गुनी ॥ श्यैनंपाताचमृगयातैलंपातास्वधेतिदिक्॥ ६॥**
**स्त्रीस्यात्काचिन्मृणाल्यादिर्विवक्षाऽपचयेयदि॥ लंकाशेफालिकाटीकाधातकीपंजिकाढकी॥७॥**

यथा । अल्पंमृणालंमृणाली । आदिशब्दाद्यथा । ह्रस्वोवंशोवंशी । गौरादित्वान्ङीष् । एवंकुंभीप्रणालीछत्रीपटीतटीमठीत्यादयः । ह्रस्वार्थेकन्प्रत्य यःस्त्रियां । यथापेटिका । काचिदितिकिं । अल्पोवृक्षोवृक्षकइत्यादिनस्त्रियां । अथङ्याबूङंतमित्यादिनोक्तलिंगानामपिकेषांचिन्नाम्नांसुखेनलिंगज्ञा नायपृथक्पाठंकांतादिक्रमेणाह । लंकेति । लंकाराक्षसपुरी । शेफालिकापुष्पभेदःवृक्षभेदश्च । "सतुनिर्गुंडीइतिप्रसिद्धः ।" टीकाविषमपदव्या ख्या । धातकीवृक्षभेदः । "धायटीइतिप्रसिद्धा ।" पंजिकानिःशेषपदव्याख्या । आढकीतुवरी । "तूरइतिप्रसिद्धा ।" ॥ ७ ॥

सिध्रकावृक्षभेदः। सारिकापक्षिभेदः। "साळंकीइतिप्रसिद्धा।" हिक्कास्वरभेदः। ऊर्ध्ववातप्रवृत्तौशब्दविशेषः उचकीइतिप्रसिद्धः।" प्राचिकावनमक्षिका। "पक्षिभेदइतिस्वामी।" उल्कातेजःपुंजः। पिपीलिकाकीटभेदः। मुंगीइतिप्रसिद्धा। शनैर्यातिपिपीलिकइतिपुंस्त्वमपीतिस्वामी।" तिंदुकी वृक्षभेदः। "टेंभुरणीइतिप्रसिद्धा।" कणिकापरमाणुः। भंगिःकौटिल्यभेदः। "बिच्छित्तिर्वा। व्याजच्छलनिभेभंगिर्विविदिर्भीतिर्निमीलिकेतिरभसः।" सुरंगाविवरभेदः। "सुरंगइतिख्यातः।" सूचिर्व्यधनी। स्त्रीसूचिनृत्यभेदेचव्यधनीशिखयोरपीतिरत्नकोशः। "माढिःपत्रशिरा" माढिर्दैन्यंपत्रशिरेतिहैमः ॥८॥

**सिंध्रकासारिकाहिक्काप्राचिकोल्कापिपीलिका ॥ तिंदुकीकणिकाभंगिःसुरंगासूचिमाढयः॥ ८॥ पिच्छावितंडा काकिण्यश्चूर्णिःशाणीद्रुणीदरत् ॥**

पिच्छा। शाल्मलिः। "निर्यासः। पिच्छाशाल्मलिवेष्टके। पंक्तिपूगच्छटाकोशमंडेष्वश्वपदामये। मोचायांपिच्छलइतिहैमः।" वितंडावादभेदः। काकिणीपणचतुर्थांशः। "काकिणीपणतुर्यांशेमानदंडेचदृश्यते। कृष्णलैकवराट्योःस्यादुन्मानस्यांशकेपिचेतिमेदिनी। रभसस्तुनांतेष्वप्याह। पणोदमानदंडाभ्यांतुर्यांशेपिचकाकिनीति। आढकस्यपंचांशतमोभागउदमानं। उक्तंचगणितावल्यां। कुल्यास्यादष्टभिर्द्रोणैर्द्रोणपादेनचाढकः। अतोर्धशतिकोभागउदमानमुदाहृतमिति। चूर्णिःचूर्णिका। शाणीशणपटविशेषः। "निकषइतिस्वामी।" द्रुणीकर्णजलौका। "द्रुणीकूर्म्यांजलद्रोण्यामितिहैमः।" दरत्। म्लेंछजातिः।

सातिर्दानावसानयोः। कंथाप्रावरणांतरं "कंथामृन्मयभित्तौचतथाप्रावरणांतरइतिमेदिनी।" आसंदीआसनभेदः। "वेत्रासनमितिप्रसिद्धं। अंगविशेषोनाभिः। राज्ञांसभेतितत्पुरुषः। सभाराजेत्यस्यापवादोयं ॥९॥ झल्लरीवाद्यभेदः। "झलरीझल्लरीचढक्काहुडुक्येबालचक्रकइतिमेदिनी।" चर्चरीकरशब्दःहर्षक्रीडावा। "चर्चरीगीतभेदेचकेशभित्करशब्दयोरितिकोशांतरं।" पारीहस्तिपादरज्जुः। "पारीपूरापरागयोः। पात्र्यांकर्पूरिकायांचपादबंधेचहस्तिनामितिहैमः।" होरालग्नार्धं। "होरातुलग्नेराश्यर्द्धेशास्त्ररेखाप्रभेदयोरितिहैमः। लद्वाग्रामचटकः। "लद्वाकरंजभेदेस्यात्फलेवाद्येखगांतर

**सातिःकंथातथाऽसंदीनाभीराजसभापिच ॥ ९ ॥ झल्लरीचर्चरीपारीहोरालद्वाचसिध्मला॥ लाक्षालिक्षाचगंडूषागृध्रसीचमसीमसी॥ १०॥ इतिस्त्रीलिंगसंग्रहः॥**

इतिमेदिनी।" सिध्मलामत्स्यविकृतावितिमेदिनी। सिध्मलाशुष्कमांसेस्त्रीत्रिलिंग्यांतुकिलासिनीतित्रिकांडशेषः।" लाक्षाजतु। लिक्षायूकांडं। गंडूषाजलादिनामुखपूरणं।"पुंस्यपि। गंडूषोमुखपूर्तौस्याद्गजहस्तांगुलावपि। प्रसृत्याप्रमितेऽपिस्यादितिहैमः। उन्नतनाभिस्तुगंडूषानापिमुखपूर्तिरितिबोपालितः।" गृध्रसीवातरोगभेदः सनुऊरुसंधौभवति। चमसीयज्ञपात्रभेदः।"प्रणीतेतिप्रसिद्धा। माषपिष्टपोलिकाविशेषःइतिवैद्यकग्रंथे। चमसोयज्ञपात्रस्यभेदेऽस्त्रीपिष्टकेस्त्रियामितिमेदिनी।" मसीकज्जलं। "मेलामसीजलंपत्रांजनंचस्यान्मसिर्द्वयोरितित्रिकांडशेषः।"॥१०॥ इतिस्त्रीलिंगसंग्रहः ॥

अथपुल्लिंगसंग्रहः ॥ पुंस्त्वेइतिपतद्ग्रहशब्दपर्यंतमधिकारः। भेदास्तुषितसाध्यादयः । अनुचराःसुनंदादयः। तैःसहिताःसुरासुराःदेवदैत्याःपर्यायैःसहपुंसि सुरपर्यायायथा। अमरानिर्जरादेवामरुतइत्यादयः। तद्भेदायथा। तुषिताःसाध्याः। इंद्रोमरुत्वान्मघवा सूरःसूर्योर्यमा। हाहाहूहूःतुंबुरुरित्यादि। अनुचरायथा। विष्णोरनुचराजयविजयप्रभृतयः। रुद्रानुचरानंदिकेश्वरादयः । एवंअसुरपर्यायादैत्यादानवाइत्यादयः। तद्भेदाबलिनमुच्यादयः। असुरानुचराःकूश्मांडमुंदादयः। एवमुन्नेयंसर्वत्र। एतेषामपिदैवतानिपुंसिवादेवतास्त्रियामित्यादिबाधकंस्मारयिष्यति। अबाधिताइतिवक्ष्यमाणेन । स्वर्गादयश्चोनविंशतिःसभेदाःसपर्यायाश्चपुंसिस्युः। स्वर्गपर्यायोयथा । स्वर्गोनाकस्त्रिदिवइत्यादिः । द्योदिवौद्वेस्त्रियांक्लीबेत्रिविष्टपमितिबाधकंबलवत्तरंतद्विना

**पुंस्त्वेसभेदानुचराःसपर्यायाःसुरासुराः॥ स्वर्गयागाद्रिमेघाब्धिद्रुकालासिशरारयः॥ ११ ॥**

पुंस्त्वं। यागोयज्ञः। मखःक्रतुः। तद्भेदाअग्निष्टोमादयः। इष्ट्यादेर्बाधितत्वंवक्ष्यति । अद्रिःगिरिःपर्वतः। तद्भेदामेरुसह्यादयः । एषांमध्येऽपवादःचेदुक्तः शैलवर्गे। मेघोघनइत्यादिःपर्यायः। भेदआवर्तादिः। अभ्रस्यतुअभ्रंमेघइतिक्लीबपाठोबाधकः। अब्धिःसमुद्रइत्यादयःसमुद्रपर्यायाः। क्षीरोदादिर्भेदः द्रुर्वृक्षः। शाखीत्यादिपर्यायः। वटादिर्भेदः। अत्रापिकचिद्रूपभेदादिना। "पाटलाशिंशपादौ" अपवादाउक्ताः। कालोदिष्टःसमयःएवंपर्यायः। मासादयोभेदाः। असिःखड्गः। नंदकादयोभेदाः। "ईल्यादौबाधः" शरोबाणः। भेदोनाराचादिः। इषुर्द्वयोरितिविशेषोदर्शितः। अरिःशत्रुः। भेदआततायादिः॥ ११

करोराजयास्वभागोरश्मिःपाणिश्च। दीधित्यादीनांतुपुंस्त्वंबाधितं। गंडःकपोलः । ओष्ठोदंतच्छदः । दशनवसनादितुरूपभेदात्बाधितं। दोःप्रवेष्टः। भुजबाह्वोस्तुद्वयोरितिविशेषः। दंतोरदः। भेदोजंभः। कंठोगलः। "समीपगलभेदेषुकंठंत्रिषुविदुर्बुधाइतिशाश्वतः।" केशःकचः। नखःकररुहः। नखोऽस्त्रीत्यादिनाबाधितं। स्तनःकुचः। एतेयथासंभवंसभेदपर्यायाःपुंसि । अन्हःअहश्चएतदंताःपुंसिस्युः। यथा। अन्हःपूर्वपूर्वाह्णः। "अन्हःअपरंअपराह्णः।" द्वेअहनीसमाहृतेद्व्यहः। क्ष्वेडभेदाविषविशेषाःपुंस्त्वेस्युः। यथा । सौराष्ट्रिकः। अत्रगरलंविषंपुंसिक्लीबेच । काकोलंइत्यादिबाधितं। रात्रांताइतिसमासांतस्यैकदेशानुकरणं। एवमुत्तरत्रापि। रात्रशब्दोंऽतेयेषांतेयदिप्राक्असंख्यावाचकशब्दरहितास्तर्हिपुंसि। यथा। अहश्चरात्रि

**करगंडोष्ठदोर्दंतकंठकेशनखस्तनाः॥ अन्हाहांताःक्ष्वेडभेदारात्रांताःप्रागसंख्यकाः॥ १२॥ श्रीवेष्टाद्याश्चनिर्यासाअसन्नंताअबाधिताः॥**

श्चाहोरात्रः। सर्वरात्रः। पूर्वरात्रः। अपररात्रः। प्रागूसंख्यकाइतिकिं । पंचरात्रं। गणरात्रं। पुण्यरात्रस्यार्धर्चादिपाठातक्लीबत्वंच ॥१२॥ श्रीवेष्टादयोयेनिर्यासाःद्रवसारवाचकास्तेपुंसिस्युः। श्रीवेष्टःसरलः। "श्रीपिष्टइतिक्कचित्पाठः।" आद्येनश्रीवासवृकधूपादयः। चकाराद्गुग्गुलुसिल्हकादयः। असुचअनूचतावंतौयेषांतेअसन्नंताः। द्युचक्रमसिसुसन्नंतमित्यादिनावक्ष्यमाणेनअप्सरआदीनांपूर्वोक्तेनचबाधकेनाबाधिताश्चेत्पुंसिस्युस्तत्रअसंतायथा। अंगिराः। वेधाः। चंद्रमाः। अन्नंतायथा। कृष्णवर्त्मा । मघवा। अबाधिताइतिकिं। इदंवयःइदंलोम।

तुश्चरुश्चतुरूतौविरामेयेषांतेतुरुविरामकाः। कशेरुजतुवस्तूनिहित्वातुशब्दांताश्चरुशब्दांताश्चपुंसिस्युरित्यर्थः। यथा। हेतुः। सेतुः। धातुः। मंतुस्तंतुरित्यादि। कुरुः। मेरुः। किंशारुरित्यादि। कशेर्वाद्युपलक्षणं दारुश्मश्रुप्रभृतीनां। तत्रकशेरुअस्थिविशेषः। तृणविशेषोवा। जतुलाक्षा ॥ १३ ॥ कषणादयःषड्वर्णाउपांतेअंत्यसमीपेयेषांतेतथा। यदीति। यदिएतेकादिवर्णषट्कोपांताअदंताःस्युस्तर्हिपुंसिभवंति। यथा। अंकः।

कशेरुजतुवस्तूनिहित्वातुरुविरामकाः ॥ १३ ॥ कषणभमरोपांतायद्यदंताअमीअथ ॥



लोकः। स्फटिकः। शुल्कवल्कादितुबाधितंपूर्वं। ओषष्ठोषमाषप्लक्षादयःषोपांताः। वर्षादयस्तुपूर्वंबाधिताः। पाषाणगुणकिरणादयोणोपांताःविषाणादिबाधितं। कौस्तुभदर्भशलभादिर्भोपांतः। कुसुंभादिबाधितं। होमग्रामगुल्मध्यामादयोमोपांताः। पद्मादेर्वापुंसीत्यादिनाबाधितत्वं। झर्झरसीकरसीरप्रभृतिःरोपांतः। अजिरादेर्बाधः।

पकारादिवर्णषट्कोपांताःअबाधिताश्चेत्पुंसिस्युःअत्रयद्यदंताइतिपूर्वोक्तंनसंबध्यते। अथादित्वात्। पकारोपांतायथा। यूपबाष्पकलापादयः। कुतपादिर्बाधितः। थकारोपांतावेपथुरोमंथादयः। नोपांताइनघनभान्वादयः। वनादिस्तुबाधितः। योपांताआयव्ययजायुतंतुवायादयः। मृगयादिस्तुबाधितः। सोपांतारसहासादयः। बिसादिर्बाधितः। टोपांताःपटादयः। किरीटादेर्बाधकमुक्तं। गोत्रेति। गोत्रंवंशः। तस्मिन्नाख्यासंज्ञायेषांतेगोत्राख्याऋषिसंज्ञकाःगोत्रस्यादिपुरुषाःयेप्रवराध्यायपठिताःयेप्यन्येअपत्यप्रत्ययंविनागोत्रवाचित्वेनलोकेप्रसिद्धास्तेपुंसिस्युः। यथा। भरद्वाजःगोत्रमस्माकं। एवंकश्यपवत्सप्रभृतयः। चरणस्यवेदशाखायाआह्वयाःसंज्ञाःपुंसिस्युः। यथा। कठःबह्वृचइत्यादि ॥ १४ ॥ नाम्निसंज्ञायांअकर्तरि

पथनयसटोपांतागोत्राख्याश्चरणाह्वयाः ॥ १४ ॥ नाम्न्यकर्तरिभावेचघञजब्नङ्णघाथुचः ॥

चकारकेभावमात्रेचविहितास्तेघञादयःसप्तप्रत्ययाःपुंसिस्युःभावेचेतिचकारादसंज्ञायांचघञ्गृहीतः। घञंतायथा। प्रास्यतइतिप्रासः। विदंतिअनेनवेदः। प्रपतत्यस्मात्प्रपातः। भावः। माघः। पाकः। त्यागः। अच्यथा। जयः। चयः। नयः। अप्यथा। करः। गरः। लवः। प्लवः। नङ्यथा। यज्ञः। प्रश्नः। याञ्ञेत्यत्रतुपुंस्त्वंबाधितं। नङउपलक्षणार्थत्वात्। स्वपोनन्। स्वप्नः। स्वप्नःसंवेशइत्यपीतिवापुंस्त्वसिद्धिर्बोध्या।" णप्रत्ययोयथा। न्यादः। घप्रत्ययोयथा। उरच्छदः। अथुच्यथा। वेपथुः।

ल्युरिति । कर्तरिनंद्यादिल्युःपुंसिस्यात् । यथानंदनः । मरणः । मधुसूदनः । भावेपृथ्वादिभ्योयइमनिच्सपुंसिस्यात् । यथा । पृथोर्भावःप्रथिमा । महिमा । भावइतिकिं । वृणोतीतिवरिमापृथ्वी । अत्रभावेइतिशब्दोदेहलीदीपन्यायेनपूर्वत्रपरत्रचसंबध्यते । “भावेकोयथा । आखूत्थः । प्रस्थः।” प्रादितः अन्यतश्च परोयोघुसंज्ञोधातुस्तस्माद्विहितःकिप्रत्ययःपुंसिस्यात् । दापूदैपौविनादारूपोधारूपश्चधातुर्घुसंज्ञकः । प्रादितोयथा । प्रधिः । नि

ल्युःकर्तरीमनिच्भावेकोघोःकिःप्रादितोऽन्यतः॥ १५॥ द्वंद्वेऽश्ववडवावश्ववडवा
नसमाहृते॥ कांतःसूर्येंदुपर्यायपूर्वोऽयःपूर्वकोपिच॥ १६॥

धिः । आदिः । अन्यतोयथा । जलधिः । इषुधेस्तुद्वयोरितिबाधितत्वं ॥१५॥ द्वंद्वेसमाहारादन्यत्रद्वंद्वसमासेऽश्ववडवौपुंसि । स्वयमेवोदाहरति । अश्वाश्ववडवाश्वाश्ववडवाः । एवमश्ववडवान् । अश्ववडवैरित्यादिप्रयोगः। समाहारेत्वश्ववडवमितिक्लीबं। सूर्यचंद्रपर्यायपूर्वकःकांतशब्दःपुंसि यथा। सूर्यकांतः । अर्ककांतः । चंद्रकांतः । इंदुकांतः । सोमकांतः । अयोवाचकपूर्वकोपिकांतःपुंसियथा । अयस्कांतः । लोहकांतः ॥ १६ ॥

इदानींपुल्लिंगविशेषपर्यंतमनुक्तानामकांतादिक्रममनतिक्रम्याह । वटकःपिष्टकभेदः । अनुवाकोवेदावयवः । रल्लकःकंबलः । कुडंगकोवृक्षलतागहनं । “कुटंगकइत्यपि ।” पुंखोबाणावयवः । न्यूंखःसामवेदेनिपातितओकारः । “न्युंखइतिह्रस्वोकारोपि । न्युंखःसम्यग्मनोज्ञेचसाम्नःसट्प्रवणेपिचेतिमेदिनी ।” समुद्गःसंपुटकः। विटोधूर्तः। “विटोद्रौखदिरेषिंगेमूषिकेखदिरेपिचेतिमेदिनी।” पट्टःकाष्ठादिरचितआसनविशेषः। “पट्टश्चतुष्पथेपीठेराजादेःशासनांतरे। व्रणादिबंधनेपेषाश्मनीतिहैमः।” घटस्तुला “घटादिव्यतुलायांस्याद्धटीचीरेचवाससइतिमेदिनी” अंधकूपादयःखटाः।

वटकश्चानुवाकश्चरल्लकश्चकुडंगकः॥ पुंखोन्यूंखःसमुद्गश्चवि
टपट्टघटाःखटाः॥ १७॥ कोट्टारघट्टहट्टाश्चपिंडगोंडपिचंडवत्॥

“खटस्तृणेकफे । टंकेंधकूपेप्रहारइतिहैमः”॥१७॥ कोट्टोदुर्गपुरं। अरघट्टःकूपभेदः। “अरैश्चक्रावयवसदृशैः काष्ठविशेषैर्घट्यतेरच्यतेसोऽरघट्टः। राहाटइतिप्रसिद्धइत्यन्ये ।” कस्यचिन्मतेटकारांतेष्वपिभट्टग्रामइतिन्यायेनरेफांतोपिकोट्टारइतित्र्यक्षरोनिबद्धः । “कोट्टारोनागरेकूपेपुष्करिण्याश्चपाटकइतिमेदिनी। घट्टःघाटइतिप्रसिद्धः।हट्टःक्रयविक्रयस्थानं। पिंडोमृदादिसंघातः।गोंडोनाभिः। “गोंडोपामरजातौचवृद्धनाभौचसंमतइतिरुद्रः ।” पिचंडउदरं “पिचिंडइत्यपि। पिचिंडउदरेपशोरवयवेपुमानितिमेदिनी ।” पिचंडवत्गड्वादयोपिपुंसिस्युरितिवतानिर्दिश्यते ।

गडुर्गलगंडः “गडुःपृष्ठगुडेकुब्जइतिविश्वः” करंडोवंशादिकृतभांडभेदः ।“करंडोमधुकोशेसौकारंडवेदलाढकइतिहैमः।” लगुडोवंशादिदंडः। वरंडोमुखरोगः। “वरंडोवदनव्यथा। अंतरावेदिसंघौचेतिहैमः।” किणोमांसग्रंथिभेदः ।सतुखनित्रदंडादिसंघर्षणात्करतलादौस्पष्टः।“व्रणजंचिन्हंचकिणः” घुणःकाष्ठकृमिः।“घुणःस्यात्काष्ठवेधकइतिरत्नकोशः।” ॥१८॥ दृतिःचर्मपुटकः। “दृतिश्चर्मपुटेमत्स्येनेतिमेदिनी।”सीमंतःकेशवेशः।हरित्पालाशवर्णः।“हरिद्दिशिस्त्रियांपुंसिहयवर्णविशेषयोः।अस्त्रियांस्यात्तृणेचेतिमेदिनी ।” रोमंथःपशूनांचर्वितचर्वणं। उद्गीथःसामभेदः।“उद्गीथःप्रवणःसामवेदध्वनिरित्यरुणः” बुद्बुदोजलविकारः।कासमर्दोगुल्मभेदः। अर्बुदोदशकोटयः। अर्बुदोमांसकीलेस्यात्पुरुषेदशकोटिषुइतिमेदिनी ।”अर्दनिरग्निः। कुंदःशिल्पभांडं । “कुंदोऽच्युतेनिधौ। चक्रभ्रमौचमाध्येचेतिहैमः।” फेनोजलविकारः। स्तूपोवटकादिः।एतौयूपश्च। “पूपइत्यपि॥” १९ ॥ आतपःसूर्यालोकः । क्षत्रियेनाभिः । क्षत्रियवाचीनाभिशब्दःपुंसीत्यर्थः । कुणपःशवभेदः। “कुणपःपूतिगंधौशवेपिचेतिमेदिनी।” क्षुरोवपनशस्त्रं। क्षुरःस्याच्छेदनद्रव्येकोकिलाक्षेचगोक्षुरइतिमेदिनी ।” केदरोव्यवहारपदार्थः ॥

गडुःकरंडोलगुडोवरंडश्चकिणोघुणः॥ १८ ॥ दृतिसीमंतहरितोरोमंथोद्गीथबुद्बुदाः॥ कासमर्दोर्बुदःकुंदःफेनस्तूपौसयूपकौ॥ १९ ॥ आतपःक्षत्रियेनाभिःकुणपक्षुरकेदराः॥



पूरोजलप्रवाहः। “पूरःस्यादंभसांवृद्धौव्रणसंशुद्धिखाद्ययोरितिहैमः। ”क्षुरप्रोबाणभेदः । “खुरप्रइतिकवर्गद्वितीयादिरपि” चुक्रःशाकभेदः। “चुक्रःस्त्वम्लेऽम्लवेतसइतिहैमः।” गोलोवर्तुलपिंडः। हिंगुलोरागद्रव्यभेदः। क्लीबेचोक्तौवैश्यवर्गे। “हिंगुलोवर्णकद्रव्येनाभंटाक्यांतुहिंगुलीतिमेदिनी। हिंगुलःस्यात्तुहिंगुलमितिमुकुटः।” पुद्गलःआत्मा।“पुद्गलःसुंदराकारेत्रिषुपुंस्यात्मदेहयोरितिमेदिनी।” ॥२०॥ वेतालोभूताधिष्ठितशवः। भल्लःस्यात्पुंसिभल्लूकइतिमेदिनी। मल्लोबाहुयुद्धकुशलः। पुरोडाशोहविर्भेदः।“पुरोडाशोहविर्भेदेचमस्यांपिष्टकस्यच॥रसेसोमलतायाश्चहुतशेषेचकीर्तितइतिविश्वः”

पूरक्षुरप्रचुक्राश्चगोलहिंगुलपुद्गलाः॥२०॥ वेतालभल्लमल्लाश्चपुरोडाशोपिपट्टिशः॥ कुल्माषोरभसश्चैवसकटाहःपतद्ग्रहः॥ २१ ॥इतिपुल्लिंगशेषः॥

पट्टिशोऽस्त्रभेदः।“पटिसइतिदंत्यसांत्यइतिमुकुटः” कुल्माषोऽर्धस्विन्नोयवःकुत्सितमाषोवा। “कुल्माषंकांजिकेयावकेपुमानितिमेदिनी।” रभसःहर्षः। “रभसोहर्षवेगयोरितिविश्वः।” सकटाहःकटाहसहितःकटाहशब्दश्चपुंसीत्यर्थः । कटाहोवटकादिपाकपात्रं। “कटाहोघृततैलादिपाकपात्रेपिकर्परे। कटाहःकूर्मपृष्ठेचसूपेचमहिषीशिवाविविविश्वः। कटाहःकूर्मकर्परे । द्वीपस्यचप्रभेदेचेतिमेदिनीच।” सनिष्ठीवतांबूलादिचर्वणनिक्षेपपात्रंपतद्ग्रहः।॥ २१ ॥ इतिपुल्लिंगशेषः ॥

द्विहीनेद्वाभ्यांस्त्रीपुंसाभ्यांहीनेनपुंसके। अधिकारोयमाबाल्हिकात्। श्लोकद्वयेप्राधान्येननिर्दिष्टाखादिशब्दषड्विंशतिःपर्यायैःसहक्लीबे। अत्रान्यदिति बाधितात्यदन्यत्तदेवक्लीबमितिसावधानार्थमुक्तं। चकाराद्वस्त्राभरणादिसंग्रहः। खमिंद्रियंव्योमचतद्यथा। छिद्रंनभःवियत्इत्यादि। अरण्यंविपिनंकाननमित्यादि। पर्णपत्रंदलं। "पर्णपत्रेकिंशुकेचेतिमेदिनी" श्वभ्रंतुपातालमित्यादि। हिमंतुप्रालेयमित्यादि। "हिमंतुषारमलयोद्भवयोःस्यान्नपुंसकमिति मेदिनी।" उदकंतुजलंनीरं। शीतंशीतलमित्यादि। उष्णंतिग्ममित्यादि। शीतोष्णंगुणेक्लीबंतद्वतित्रिषु। "शीतंहिमगुणेक्लीबंशीतलालसयोस्त्रिष्विति मेदिनी। उष्णोग्रीष्मेपुमान्दक्षाशीतयोरन्यलिंगकइतिमेदिनी।" मांसंपिशितंतरसमित्यादि। रुधिरंशोणितंरक्तं "रुधिरोंगारकेपुंसिक्लीबंतुकुंकुमासृजोरितिमेदिनी।" मुखंतुवदनंवक्त्रं। "मुखंनिःसरणेवक्त्रेप्रारंभोपाययोरपि॥ संध्यंतरेनाटकादेःशब्देपिचनपुंसकमितिमेदिनी।" अक्षितुनयनंनेत्रं। द्रविणंधनमित्यादि "द्रविणंकांचनेधने। पराक्रमेबलेपिस्यादितिहैमः।" बलशब्देनशक्तिसैन्ययग्रहणं। शक्तौयथा। बलंशुष्ममित्यादि। सैन्यंचक्रमित्यादि॥२२॥ फलंफलमात्रंकपित्थमित्यादि। "हलमित्यपिक्वचित्पाठः" हेमसुवर्णंकनकमित्यादि। शुल्बंताम्रमित्यादि। "शुल्बंताम्रेयज्ञकर्मण्याचारेजलसन्निधाविति मेदिनी।" लोहंकालायसमित्यादि। सुखंशर्मशातमित्यादि। दुःखंतुकृच्छ्रंकष्टं। शुभंकल्याणंकुशलमित्यादि॥ अशुभमकल्याणमित्यादि॥

द्विहीनेन्यच्चखारण्यपर्णश्वभ्रहिमोदकं ॥ शीतोष्णमांसरुधिरमुखाक्षिद्रविणंबलं ॥ २२ ॥ फलहेमशुल्बलोहसुखदुःखशुभाशुभं ॥



जलपुष्पाणि। कुमुदकमलकल्हारोत्पलादीनि। लवणंसैंधवमित्यादि। व्यंजनंतेमनंनिष्ठानमित्यादि। "व्यंजनंश्मश्रुचिन्हयोः॥ तेमनेऽवयवेंकादाविति हैमः।" व्यंजनविशेषाणामपिदधितक्रादीनांग्रहणं। अनुलेपनंकुंकुमादि। अत्रबाधितादन्यत्इतिकिं। आकाशोविहायाद्यौः। अटवीअरण्यानीत्यादिकंएवमन्यदप्यूह्यं॥२३॥ कोट्याअन्याकोटिशब्दंविनायाशतादिसंख्यासाक्लीबेस्यात्। लक्षाशब्दोवाक्लीबे। पक्षेस्त्रियां। "लक्षानपुंसिसंख्यायां क्लीबंव्याजशरव्ययोरितिमेदिनी।" तादतिलक्षस्यपर्यायोनियुतमित्यर्थः। उदाहरणंच। नियुतंशतंसहस्रमयुतमित्यादि। "शतंसहस्रमयुतंनियुतंप्रयुतंमतं॥ स्त्रीकोटिरर्बुदमितिक्रमाद्दशगुणोत्तरमितिरत्नकोशः।" असंतमिसंतमुसंतमन्नंतंचयत्द्व्यच्कं द्विस्वरंतत्क्लीबे। असंतंयथा। पयः। मनः। इसंतंयथा। सर्पिः। ज्योतिः। उसंतंयथा। वपुःयजुरित्यादि। अन्नंतंयथा। चर्म। शर्म। सामेत्यादि। अनेनैवक्लीबत्वेसिद्धेपरतोयन्मर्मशब्दोपादानं तदस्यानित्यत्वाज्ञापनार्थं। तेनगुणांधकारशोकेषुतमोराहौपुमानयमित्याद्यपिसिद्धं। अकर्तरिकर्तुरन्यत्रयदनांतंअनेत्यंतेयस्यतत्क्लीबे। यथा। गमनं। मरणं। दानं। करणं। वरणं। अकर्तरीतिकिं। इध्मव्रश्चनःकुठारः। नंदयतीतिनंदनः॥ २४॥

जलपुष्पाणिलवणव्यंजनान्यनुलेपनं॥ २३॥ कोट्याःशतादिसंख्याऽन्यावालक्षानियुतंचतत्॥ द्व्यच्कमसिसुसन्नंतंयदनांतमकर्तरि॥ २४॥

त्रांतंक्लीबेयथा। पात्रंवहित्रंवस्त्रंगात्रमित्यादि। सकारोलकारोवाउपधाअंत्यात्पूर्वोयस्यतत् सोपधं यथा। बिसं। अंधतमसं। लोपधंयथा। कुलंमूलमित्यादि। शिष्टमितियदवशिष्टंप्रागुक्तादन्यत्। तच्चप्रागुक्तंयदबाधितंतदपित्रांतादिकंक्लीबेइत्यर्थः। शिष्टमितिकिं। पुत्रः। वृत्रः। हंसः। कंसः। पनसः। शिला। कालः। गलः। संख्यापूर्वोरात्रशब्दःक्लीबे। रात्रान्हाहाःपुंसीतिपुंस्त्वप्राप्तेरपवादोयं। त्रिरात्रं। पंचरात्रं। संख्ययेतिकिं। अर्धरात्रः। मध्यरात्रः। पात्रादिभिरदंतैरेकार्थोयोद्विगुःसक्लीबे। पंचरात्रं। आदिनाचतुर्युगं। लक्ष्यानुसारतःशिष्टप्रयोगानुगमेनेत्यर्थः। अनेनपंचमूली। त्रिलोकीत्यादिरपवादः। एकार्थःकिं। पंचकपालःपुरोडाशः। द्विगुरयंतद्धितार्थः॥२५॥द्वंद्वसमासस्यैकत्वं। अव्ययीभावश्चक्लीबे। द्वंद्वैक्यंयथा। पाणिपादं। शिरोग्रीवं। मार्दंगिकपाणविकं।

त्रांतंसलोपधंशिष्टंरात्रंप्राक्संख्ययान्वितं॥ पात्राद्यदंतैरेकार्थोद्विगुर्लक्ष्यानुसारतः॥ २५॥
द्वंद्वैकत्वाव्ययीभावौपथःसंख्याव्ययात्परः॥ षष्ठ्याश्छायाबहूनांचेद्विच्छायंसंहतौसभा॥ २६॥

अव्ययीभावोयथा। अधिस्त्रि। उपगंगं। संख्याया अव्ययाच्चपरःपथःक्लीबे। यथा। द्विपथं। त्रयाणांपथांसमाहारस्त्रिपथं। चतुष्पथं। अव्ययाद्यथा। विपथं। कापथं। संख्याव्ययादितिकिं। धर्मपथः। योगपथः। पथइतिसमासांतानुकरणं। समासेषष्ठीविभक्त्यंतात्पराछायाक्लीबे। साचेद्बहूनांसंबंधिनीतर्ह्येव तदुदाहरति। वीनांपक्षिणांछायाविच्छायमिति। इक्षुच्छायं। बहूनामितिकिं। कुड्यस्यछायाकुड्यच्छायमिति। वास्त्रियांतुवक्ष्यते। संहतौसमूहविषयेसभाशब्दःक्लीबे। अत्रापिषष्ठ्याइत्यनुवर्तते। यथादासीनांसभादासीसभं। स्त्रीसभमित्यादि। संहताविति किं। दासीनांसभादासीसभा। दासीगृहमित्यर्थः २६



शालार्थागृहार्थाअपिशब्दात्संहत्यर्थाचयासभासाअराजकात्राजशब्दविवर्जितात्राजामनुष्यार्थात्राजार्थात्राजपर्यायात्अमनुष्यार्थात् रक्षआदिशब्दात्षष्ठ्यंतात्पराचेत्क्लीबे। शालागृहं। अर्थोऽभिधेयोयस्याःसाशालार्था। अराजकराजपर्यायात्यथा। इनसभं। प्रभुसभं। अमनुष्यार्थाद्यथा। रक्षःसभं। पिशाचसभं। अराजकात्किं। राजसभा। "राजपर्यायग्रहणान्नेह। चंद्रगुप्तसभा। राजविशेषोयं।" षष्ठ्याइतिकिं। नृपतिविषयेसभानृपतिसभा। नृणांपतिर्यस्यांसाचासौसभाचेतिवानृपतिसभा। अमनुष्यार्थादितिकिं। दासीसभा। दासीनांशालेत्यर्थः। इमादिशइतिदासीसभमित्यादीनिक्रमेणत्रीण्युदाहरणानीत्यर्थः। तत्रदासीसभमित्यादितुसंहतावित्यस्यैवइतरेतुशालासंहतिसाधारणे॥२७॥ तयोरुपज्ञोपक्रमयोरादित्वंप्राथम्यंतस्यप्रकाशनेद्योतनेउपज्ञां

शालार्थापिपराराजामनुष्यार्थादराजकात्॥दासीसभंनृपसभंरक्षःसभमिमादिशः॥ २७॥उपज्ञोपक्रमांतश्चतदादित्वप्रकाशने॥ कोपज्ञकोपक्रमादिकंथोशीनरनामसु॥ २८॥

तउपक्रमांतश्चसमासःक्लीबेस्यात्। उदाहरणमाह। उपज्ञायतइत्युपज्ञा। कोब्रह्मातस्योपज्ञाकोपज्ञंप्रजा। कस्योपराक्रमःकोपक्रमंलोकः। प्रजापतिनाप्रथमंसृष्टत्वात्तेनादावुपज्ञाताप्रजेत्यर्थः। तदादित्वेतिकिं। देवदत्तोपज्ञामृन्मयःप्रकारः। मृत्प्रकारस्यानेककारणत्वात्। देवदत्तेतिसामान्यशब्देनचतदादित्वप्रतिपादनाभावेक्लीबत्वाभावः। एवंदेवदत्तोपक्रमोरथः। अत्रापिषष्ठ्याइत्यनुवर्तते। उशीनराणांनामसुमध्येषष्ठ्यंतात्पराकंथाक्लीबे। सौशमीनांकंथासौशमिकंथं। उशीनरादन्यत्रदाक्षिकंथा। नामसुइतिकिं। वीरणकंथा॥२८

चकारइत्अनुबंधोयस्यसचित् । नश्चणश्चकश्चचिच्चनणकचितः । तेभ्योऽन्येयेतव्यदादयोऽदंताधातुप्रत्ययाः भावेविहितास्तेक्लीबे । तत्रधातुप्रत्ययाय था । भवितव्यं । भाव्यं । सहितं । भुक्तं । नणकचिद्भ्योन्यइतिकिं । प्रश्नः । न्यादः । आखूत्थः । वेपथुः । नणकेतिघञउपलक्षणं । पाकः । भावेकिं । कर्त व्योधर्मसंग्रहः । मृतोवैरी । समूहार्थेयथा । भिक्षाणांसमूहोभैक्षं । गार्भिणं । औपगवकं । काकमित्यादि । भावेदंतायथा । गोर्भावः गोत्वं । शुचेर्भावःशौचं कर्मणियथा । शौक्ल्यं । राज्ञःकर्मराज्यं । चौर्यं । तल्प्रत्ययस्यतुस्त्रीत्वमुक्तं । पुण्यसुदिनाभ्यांपरोविहितसमासांतोऽहन्शब्दःक्लीबे । अन्हाहांताइतिपुंस्त्व

भावेनणकचिद्भ्योन्येसमूहेभावकर्मणोः ॥ अदंतप्रत्ययाःपुण्यसुदिनाभ्यांत्वहःपरः ॥ २९ ॥ क्रि
याव्ययानांभेदकान्येकत्वेप्युक्थतोटके ॥ चोचंपिच्छंगृहस्थूणंतिरीटंमर्मयोजनं ॥ ३० ॥

स्यापवादोयं । पुण्याहं । सुदिनाहं सुदिनशब्दःप्रशस्तार्थः ॥ २९ ॥ क्रियाणामव्ययानांचभेदकानिविशेषणानिक्लीबेएकवचनेचस्युः । क्रियाविशेषणंय था । मंदंपचति । सुखंतिष्ठंतियोगिनः । सलीलंनृत्यतिबाला । अव्ययविशेषणंयथा । रम्यंस्वः । सुखदंप्रातः । अथकानिचित्कंठरवेणाह । उक्थंसामभेदः । तोटकंवृत्तभेदः । चोचमुपभुक्तफलावशिष्टंतालफलंवा । कदल्याःफलमितिकश्चित् । पिच्छंबर्हं । गृहस्थूणंगेहस्तंभः । तिरीटंवेष्टनं । "शिरोभूषणमितिके चित् ।" मर्मसंधिस्थानं । योजनंक्रोशचतुष्टयं । "योजनंपरमात्मनि" चतुष्क्रोश्यांचयोगेइतिमेदिनी" ॥ ३० ॥



राजसूयवाजपेयेयागभेदौ । "राज्ञालतात्मकःसोमःसूयतेऽत्रराजसूयं । वाजंपैष्टीसुरापेयमत्रवाजपेयं ।" कवेःकृतौवर्तमानंगद्यं । पदसमूहः पद्यंश्लो कः । "पद्यंश्लोकेपुमान्शूद्रेपद्यावर्त्मनिकीर्तितेतिमेदिनी ।" कवेःकृताविति किं । गद्यावाक् । पद्यापद्धतिः । माणिक्यंरत्नभेदः । "मणिकेमणिपूरा ख्येनगरेभवंमाणिक्यं ।" भाष्यंपदार्थविवृतिः । "सूत्रार्थोवर्ण्यतेयत्रवाक्यैःसूत्रानुकारिभिः ॥ स्वपदानिचवर्ण्यंतेभाष्यंभाष्यविदोविदुरिति ।" सिंदूरं रक्तचूर्णभेदः । "सिंदूरस्तरुभेदेस्यात्सिंदूरंरक्तचूर्णके । सिंदूरीरोचनारक्तवेल्लिकाधातकीषुचेतिविश्वप्रकाशः" चीरंवस्त्रभेदः । "चीरीझिल्ल्यांनपुंसकं ।

राजसूयंवाजपेयंगद्यपद्येकृतौकवेः ॥ माणिक्यभाष्यसिंदूरचीरचीवर
पिंजरं ॥ ३१ ॥ लोकायतंहरितालंविदलस्थालबाल्हिकं ॥ इतिनपुंसकसंग्रहः ॥

गोस्तनेवस्त्रभेदेचरेखालिखनभेदयोरितिमेदिनी ।" चीवरंमुनिवासः । "शाक्यभिक्षुप्रावरणमितिसुभूतिः" पिंजरंपक्ष्यादिबंधनागारं । "पिंजरोऽश्वां तरेपीतेक्लीबंस्वर्णेचपीतकइतिकोशांतरं । पंजरमित्यपिपाठः" ॥ ३१ ॥ लोकायतंचार्वाकशास्त्रं । हरितालंधातुभेदः । "हरितालंधातुभेदेस्त्रीदूर्वाकाशरे खयोरितिमेदिनी ।" विदलंवंशदलकृतपात्रभेदः । स्थालंभांडभेदः बाल्हिकंकुंकुमादि । "बाल्हवमित्यपि । बल्हदेशेभवंबाल्हवं" ॥ इतिनपुंसकसंग्रहः ॥

अथचिक्कसपर्यंताःपुंसिक्लीबेचस्युः । उक्तादन्यःशेषः । यथाशंखपद्मौनिधिवाचकौपुंसि । कंबुनलिनवाचिनौतुपुन्नपुंसकयोः । तथाऽन्यत्यशब्दोपि यत्पर्यायेबाधितस्तत्पर्यायाद्भिन्नश्चेत्पुन्नपुंसकयोरित्यर्थः । ऋचोर्धमर्धर्चः । पिण्याकंतिलकल्कं । "पिण्याकोऽस्त्रीतिलकल्केहिंगुबाल्हीकसिल्ह कइतिमेदिनी ।" कंटकंरोमहर्षादि ।"कंटकःक्षुद्रशत्रौचकर्मस्थानिकदोषयोः । रोमांचेचद्रुमांगेचकंटकोमस्करेपिचेतिविश्वप्रकाशः। कंटकोनस्त्रि यांक्षुद्रशत्रौमत्स्यादिकीकसे । नैयोगिकादिदोषोक्तौस्याद्रोमांचद्रुमांगयोरितिमेदिनी" ॥ ३२ ॥ मोदकंभक्ष्यभेदः।" मोदकःखाद्यभेदेऽस्त्रीहर्षुकेपुनर

**पुन्नपुंसकयोःशेषोर्धर्चपिण्याककंटकाः॥ ३२ ॥ मोदकस्तंडकष्टंकःशाटकःकर्पटोऽर्बुदः॥**

न्यवदितिमेदिनी । मोदकोहर्षुलेखाद्यइतिहैमः ।" तंडकःउपतापविशेषः । "तंडकःखंजनेफेनेसमासप्रायवाचिच ॥ गृहदारुतरुस्कंधमायाबहुलके ष्वपीतिमेदिनी। दंडकइत्यपि" टंकोऽश्मदारणः। "टंकोनीलकपित्थेचखनित्रेटंकनेस्त्रियां॥ जंघायांस्त्रीपुमान्कोपेकोशाजियावदारणइतिमेदिनी।" शाटकःपटभेदः । कर्पटंस्थानभेदः वस्त्रभेदोवा ।" खर्वटमित्यपि । यत्रैकतोभवेद्ग्रामोनगरंचैकतःस्मृतं ॥ मिश्रंतुखर्वटंनामनदीगिरिसमाश्रयमिति" अर्बुदंसंख्याभेदः ।



पातकंब्रह्महत्यादि । उद्योगउत्साहः । चरकंवैद्यशास्त्रभेदः । "करकइत्यपिपाठस्तत्रस्यूतवस्त्रं ।" तमालोवृक्षभेदः। "तमालस्तिलकेखड्गेतापिच्छेवरुण द्रुमइतिमेदिनी ।" आमलकोधात्रीफलं । नडोंतर्विवरं । "तृणभेदश्च" ॥ ३३ ॥ कुष्टंरोगभेदः । "कुष्टंरोगेपुष्करेऽस्त्रीतिमेदिनी । कुष्टंभेषजरोगयो रितिहैमः । मुंडंशिरः । शीधुमद्यं । बुस्तंभृष्टमांसंपनसादिफलासारभागश्च । क्वचित्पुस्तमितिपाठः । क्वचित्पुश्वस्तमपि । क्ष्वेडितंवीरकृतसिंहनादः।"

**पातकोद्योगचरकनमालामलकानडः॥ ३३॥ कुष्टंमुंडंशीधुबुस्तंक्ष्वेडितं**
**क्षेमकुट्टिमं॥ संगमंशतमानार्मशंबलाव्ययतांडवं ॥ ३४ ॥**

क्षेमंकुशलं । "क्षेमोऽस्त्रीलब्धरक्षणे ॥ चंडायांनाशुभेनस्त्रीकात्यायन्यांतुयोषितीतिमेदिनी । मोक्षेपिक्षेमः । कुट्टिमंभित्तिभेदः । "कुट्टिमोऽस्त्रीनिब द्धाभूरितिकोशांतरं ।" संगमंसंयोगः । शतमानंमानभेदः । अर्मअक्षिरोगभेदः । शंबलंवर्णभेदः" पाथेयंच । शबलोऽस्त्रीसंबलवत्कूलपाथेयमत्सरइति मेदिनी ।" अव्ययंस्वरादिनिपातवाचकं । "अव्ययोऽस्त्रीशब्दभेदेनाविष्णौनिर्व्ययेत्रिष्वितिमेदिनी ।" तांडवंनृत्यभेदः ॥ ३४ ॥

कवियंमहाराष्ट्रभाषयाकडियाळीतिप्रसिद्धं । "नार्यांकवीखलीनंकवियंवानातुरंगमुखभांडमितिबोपालितः ।" कंदंपद्मिनीमूलादि । "कंदोऽस्त्रीसूरणेसस्यमूलेजलधरेपुमानितिमेदिनी । क्वचित्कर्मेतिपाठः ।" कार्पासंवस्त्रयोनिभेदः । "पारावारःपयोराशौपारावारंतटद्वयमितिहैमः । युगंधरंकूबरं ।" यूपंयज्ञांगभेदः । प्रग्रीवंद्रुमशीर्षकं । "वातायनंमुखशालावा ।" पात्रीवंयज्ञपात्रभेदः । यूषंमंडइतिप्रसिद्धं । "मुद्गामलकयूषस्तुग्राहीपित्तकफेहितइत्यु

कवियंकंदंकार्पासंपारावारंयुगंधरं ॥ यूपंप्रग्रीवपात्रीवेयूषंचमसचिक्कसौ ॥ ३५ ॥
अर्धर्चादौघृतादीनांपुंस्त्वाद्यंवैदिकंध्रुवं ॥ तन्नोक्तमिहलोकेपितच्चेदस्त्यस्तुशेषवत्
॥ ३६ ॥ इतिपुन्नपुंसकसंग्रहवर्गः ॥ स्त्रीपुंसयोरपत्यांताद्विचतुःषट्पदोरगाः ॥

क्तंवैद्यके" चमसचिक्कसौअर्धर्चादौअस्मिन्वर्गेपुन्नपुंसकाधिकारेइतियावत् । घृतादीनांपुंस्त्वाद्यंपाणिन्यादिभिरुक्तंतत्तुवैदिकं । वेदेप्रसिद्धमित्यर्थः । अतस्तदिहनोक्तं तल्लोकेप्यस्तिचेत्शेषवत्उक्तादन्यःशेषस्तद्वदस्तुशिष्टप्रयोगतोग्राह्यमित्यर्थः ॥ ३६ ॥ इतिपुन्नपुंसकसंग्रहवर्गः ॥ अपत्यांताअपत्यप्रत्ययांताःस्त्रीपुंसयोःस्युः । यथा । उपगोःअपत्यंपुमान्औपगवः । उपगोरपत्यंस्त्रीऔपगवी । वैदेहः । वैदेही । गार्ग्यः । गार्गी । द्विचतुःषट्पदोरगाः । द्विपदचतुष्पदषट्पदवाचिनोभुजगवाचिनश्च



जातिभेदाःस्त्रीपुंसयोः । तत्रद्विपदजातिभेदोयथा । मानुषःपुमान् । मानुषीस्त्री । ब्राह्मणः । ब्राह्मणी । "शूद्रः । शूद्रा । अजादित्वाट्टाप् ।" चतुष्पदोभेदोयथा । मृगः । मृगी । हयः । हयी । षट्पदभेदोयथा । भृंगः । भृंगी । उरगोयथा । उरगः । उरगी । नागः । नागी । स्त्रीयोगैःसहपुमाख्याःपुन्नामानिस्त्रीपुंसयोः । यथा । इंद्रः । इंद्राणी । मातुर्भ्रातामातुलः । तस्यस्त्रीमातुली । पुंसिवर्तमानोमातुलः । स्त्रीयोगात्स्त्रीत्वेपिवर्तते । शूद्रस्यस्त्रीशूद्री । मल्लकादयश्चस्त्रीपुंसयोः । मल्लकःपुष्पवल्लीभेदः । स्त्रियांतुमल्लिका ॥ ३७ ॥ ऊर्मिस्तरंगः । "मुनिरितिपाठः । मुनिर्यतींगुदीबुद्धपिलायागस्तिकिंशुकइतिवि

जातिभेदाःपुमाख्याश्चस्त्रीयोगैःसहमल्लकः ॥ ३७ ॥ ऊर्मिर्वराटकःस्वातिर्वर्णकोझाटलिर्मनुः ॥
मूषास्त्रपाटीकर्कंधूर्यष्टिःशाटीकटीकुटी ॥ ३८ ॥ इतिस्त्रीपुंसशेषसंग्रहवर्गः ॥

श्वप्रकाशः ।" वराटकःकपर्दकः । स्त्रियांतुवराटिका । स्वातिर्नक्षत्रं । "वर्णकश्चंदनं । विलेपनेचंदनेचवर्णकंपुन्नपुंसकमितिरभसः । वर्णकश्चारणेस्त्रीतुचंदनेचविलेपने । द्वयोर्नील्यादिषुस्त्रीस्याडुत्कर्षेकांचनस्यचेतिमेदिनी । झाटलिः किंशुकवृक्षसदृशः । मोखाइतिप्रसिद्धः । मनुःस्वायंभुवादिः मंत्रोवा मूषातैजसावर्तनी । सूपाटीपरिमाणभेदः ।" कर्कंधूर्बदरी । शाटीपटभेदः । कटीदेहावयवः । कुटीगृहकोष्टकः । अत्रमूषानकारांतः ॥ ३८ ॥ इतिस्त्रीपुंससंग्रहवर्गः ॥

भावक्रिययोः भावेकर्मणिचवर्तमानःष्यञ्प्रत्ययोवुञ्प्रत्ययश्चक्वचित्स्त्रीनपुंसकयोर्वर्तते । तत्रष्यञ्प्रत्ययमुदाहरति । औचित्यमिति । उचितस्यभावः औचित्यं । औचितीच । मित्रस्यकर्ममैत्र्यंमैत्रीवा । "एवंसामग्र्यंसामग्रीवा । आर्हत्यंआर्हती" वुञ्प्रत्ययस्तुवैरमैथुनिकादिवुन् इत्यंप्रागुदाहृतः । तथामिथुनस्यभावःकर्मवामैथुनिका । मैथुनकंच ॥ ३९ ॥ तत्पुरुषेषष्ठ्यंतंषष्ठीविभक्त्यंतंप्राक्पदंयासांताः षष्ठ्यंतप्राक्पदाः सेनाद्याः स्त्रियांक्लीबेचस्युः । उदाहरति । नृणांसेनानृसेनं । वेतिविकल्पान्नृसेनापि । इतरइतिएवमन्यत्राप्युदाहर्तव्यमित्यर्थः । यवसुरंयवसुरा । कुड्यस्यच्छायाकुड्यच्छा

स्त्रीनपुंसकयोर्भावक्रिययोःष्यञ्क्वचिच्चवुञ् ॥ औचित्यमौचितीमैत्रीमैत्र्यंवुञ्प्रागुदाहृतः ॥ ३९ ॥ षष्ठ्यंतप्राक्पदाःसेनाछायाशालासुरानिशा ॥ स्याद्वानृसेनंश्वनिशंगोशालमितरेचदिक् ॥ ४० ॥ आबन्नंतोत्तरपदोद्विगुश्चापुंसिनश्चलुप् ॥ त्रिखट्वंचत्रिखट्वीचत्रितक्षंचत्रितक्ष्यपि ॥ ४१ ॥ ॥ इतिस्त्रीनपुंसकशेषः ॥

यंकुड्यच्छायावा । षष्ठीबहुवचनांतप्राक्पदाचेच्छायाक्लीब एवेतिप्राग्दर्शितं ॥ ४० ॥ आबंतोत्तरपदोऽन्नंतोत्तरपदश्चद्विगुसमासःपुंसिनस्यात् । किंतुस्त्रीनपुंसकयोः । अन्नंतोत्तरपदस्ययोंऽत्यनकारस्तस्यलुप्लोपश्चस्यात् । आबंतांत्यपदमुदाहरति । त्रिखट्वमिति । तिस्रःखट्वाः समाहृताः त्रिखट्वं । त्रिखट्वीच । अन्नंतोत्तरपदोयथा । त्रयस्तक्षाणःसमाहृतास्त्रितक्षं । त्रितक्षीच । तक्षन्शब्दस्यांत्यनकारोलुप्तः ॥ ४१ ॥ ॥ इतिस्त्रीनपुंसकसंग्रहः ॥

पात्रादयोदाडिमांतास्त्रिषुत्रिलिंगाः । पात्रं पात्रः । इत्यादि । पात्र्यमत्रेत्रिष्वितिमेदिनी । पात्रंतुकूलयोर्मध्येपर्णेनृपतिमंत्रिणि । योग्यभाजनयोर्यज्ञभांडेनाट्यानुकर्तरीतिहैमः । वाटःपथिवृतौवाटंवरंडेऽगान्तभेदयोः ॥ वाटीवास्तौगृहोद्यानकट्योरितिहैमः ।" कुवलंबदरीफलं । "कुवलंचोत्पलेमुक्ताफलेपिबदरीफले । कुड्मलेमुकुरेपुंसिनद्वयोर्नरकांतरइतिमेदिनी ।" इतित्रिलिंगशेषः ॥ ॥ द्वंद्वैकत्वस्याव्ययीभावस्यचलिंगंप्रागुक्तं । स्वप्रधानेउभयपदप्रधानेइतरेतराख्येद्वंद्वसमासेचतत्पुरुषेचयत्परमंयिमपदस्थंलिंगंतदेवलिंगंस्यात् । तत्रद्वंद्वेयथा । कुक्कुटमयूर्याविमे । मयूरीकुक्कुटाविमौ । तत्पुरुषेयथा । धान्येनार्थोधान्यार्थः । सर्पाद्भीतिःसर्पभीतिः । सर्पभयं । वाप्यश्वः ॥ ४२ ॥ उक्तस्यतत्पुरुषलिंगस्यापवादमाह । अर्थैति । अर्थांतश

त्रिषुपात्रीपुटीवाटीपेटीकुवलदाडिमौ ॥ इतित्रिलिंगशेषसंग्रहः ॥ परंलिंगंस्वप्रधानेद्वंद्वे तत्पुरुषेपितत् ॥ ४२ ॥ अर्थांताःप्राद्यलंप्राप्तापन्नपूर्वाःपरोपगाः ॥

ब्दाः परोपगाः परगामिनः वाच्यलिंगाइत्यर्थः । यथाद्विजायायंद्विजार्थःसूपः । द्विजार्थायवागूः । द्विजार्थंपयः । अर्थेननित्यसमासोविशेष्यलिंगताचेतिवक्तव्यमितिवार्तिकं । प्रेति । प्राद्यलंप्राप्तापन्नपूर्वाःपरोपगाः । "परंविशेष्यमुपगच्छंतीत्यर्थः ।" तत्रप्रादिपूर्वोयथा । अतिक्रांतोमालामतिमालोहारः । अतिक्रांतामालामतिमालेयं । अतिमालमिदं । अवक्रुष्टः कोकिलयाअवकोकिलः । अलंपूर्वोयथा । अलंकुमार्यैइत्यलंकुमारिरयं । अलंकुमारिरियं । अलंकुमारिइदं । प्राप्तजीविकोद्विजः । प्राप्तजीविकास्त्री । प्राप्तजीविकमिदं । एवमापन्नजीविकः ।

तद्धितार्थोद्विगुर्वाच्यलिंगः । पंचकपालःपुरोडाशः । पंचकपालंहविः । संख्याशब्दाः सर्वनामसंज्ञकास्तदंतकाश्चपरलिंगभाजः । संख्यायथा । एकः पुमान् । एकंकुलं । द्वौपुमांसौ । द्वे स्त्रियौ । कुलेच । "त्रयःपुरुषाः । तिस्रःस्त्रियः । त्रीणिकुलानि । एवंचत्वारः । चतस्रः । चत्वारि" षट् संज्ञकान्वक्ष्यति । विंशत्यादीनांलिंगंद्वितीयकांडेउक्तं । शतादिकानांतुनपुंसकसंग्रहे । सर्वनामयथा । सर्वोदेशः । सर्वानदी । सर्वंजलं । एवंपरःपुमान् । "संख्यांतकोयथा । ऊनत्रयः । ऊनतिस्रः । ऊनत्रीणि" सर्वनामांतकोयथा । परमसर्वः । परमसर्वा । परमसर्वं ॥४३॥ अदिङ्नाम्नांबहुव्रीहिरन्यलिंगभाक् ।

तद्धितार्थोद्विगुःसंख्यासर्वनामतदंतकाः ॥ ४३ ॥ बहुव्रीहिरदिङ्नाम्नामुन्नेयंतदुदाहृतं ॥
गुणद्रव्यक्रियायोगोपाधिभिःपरगामिनः ॥ ४४ ॥

तदुदाहरणंस्वयमुन्नेयं । यथा । वृद्धाभार्यायस्यसवृद्धभार्यः । "बहुधनः । बहुधना । बहुधनमित्यादि ।" अदिङ्नाम्नामितिकिं । दक्षिणस्याःपूर्वस्याश्चदिशोरंतरालंदक्षिणपूर्वा । गुणयोगेनद्रव्ययोगेनक्रियायोगेनचयउपाधिर्विशेषणंतेनधर्मिणिप्रवृत्तास्तेधर्मिलिंगभाजः । गुणयोगेनयथा । गंधवतीपृथ्वी । गंधवानश्मा । गंधवत्कुसुमं । द्रव्ययोगेनयथा । दंडिनीस्त्री । क्रियायोगेनयथापाचिकास्त्री ॥ ४४ ॥

असंज्ञायांकर्तरिकृत्प्रत्ययाः परोपगायथा । करोतीतिकर्त्री । कर्तापुमान् । कर्तृकलत्रं । असंज्ञायांकिं । प्रजा । हरिः । कर्तरिकिं । कृतिः । कर्मणिकर्तरिचवर्तमानाः कृत्यप्रत्ययाः परगामिनः । कर्मणियथा । कर्तव्याभक्तिः । कर्तव्योधर्मस्त्वया । कर्तरियथा । वसतीतिवास्तव्योऽयं । वास्तव्यासा । वास्तव्यंनत् । कर्तरिकर्मणीतिकिं । भावेतुएधितव्यंत्वया । तेनरक्तमित्याद्यर्थेअणादितद्धितप्रत्ययांतानानार्थभेदकाः अनेकार्थविशेषणभूताः विशिष्टत्वाद्वाच्यलिंगाइत्यर्थः । यथाकुसुंभेनरक्ताशाटीकौसुंभी । कौसुंभःपटः । कौसुभंवासः । तेनरक्तंरागादित्यण् । रक्ताद्यर्थइत्यादिशब्दान्मथुरायाआगतोमा

कृतःकर्तर्यसंज्ञायांकृत्याःकर्तरिकर्मणि ॥ अणाद्यंतास्तेनरक्ताद्यर्थेनानार्थभेदकाः ॥ ४५ ॥ षट्संज्ञकास्त्रिषुसमा
युष्मदस्मत्तिङव्ययं ॥

थुरोयं । इयंमाथुरी । अणाद्यंताइत्यादिशब्दाद्ग्रामेभवाग्राम्यास्त्री । ग्राम्यः पुमान् । अत्रयत्प्रत्ययः ॥ ४५ ॥ षट् संज्ञकाः षांतनांतसंख्याकतिशब्दश्चत्रिलिंग्यांसमाःसरूपानित्यंबहुषुवर्तमानाअतोबहुवचनांताश्चेत्यर्थः । यथा । षडिमे । षडिमाः । षडिमानि । पंचभिरेताभिः । कतिपुमांसः । कतिस्त्रियः । कतिकुलानि । युष्मदस्मच्छब्दौतिङंतपदान्यव्ययानिचत्रिषुसमानि । युष्मच्छब्दोयथा । त्वंस्त्री । त्वंपुमान् । त्वंकलत्रं । अस्मच्छब्दोयथा । आवांपुमांसौ । आवांस्त्रियौ । आवांकलत्रे । तिङ्यथा । स्थालीभवति घटोभवति पात्रंभवति । एवं दाराभवंतीत्यादि । अव्ययंयथा । उच्चैःदाराः । उच्चैःस्त्री । उच्चैःकलत्रं । उच्चैःप्रासादइत्यादि ॥

परमिति । विरोधेविप्रतिषेधेसतिपरंलिंगानुशासनंप्रवर्तते । यथामानुष शब्दस्यकषणभमरोपांताइतिप्रागुक्तविधिनापुंस्त्वेएवप्राप्तेसति द्विचतुःषट्पदेत्यनेनोत्तरत्रोक्तेनस्त्रीपुंसविधिर्निश्चेयः । यथामानुषीयं । मानुषोयमिति । शेषमिति । शेषमत्रानुक्तं । अभिधानादिकंशिष्टानांमहाकवीनांभाष्यकारादीनांप्रयोगतोज्ञेयं । यद्वाअनुक्तंशब्दलिंगंशिष्टप्रयोगतोबोद्धव्यं । लिंगमशिष्यंलोकाश्रयत्वाल्लिंगस्येतिभाष्योक्तेरित्यर्थः ॥ ४६ ॥ उक्तमुप

परंविरोधेशेषंतुज्ञेयंशिष्टप्रयोगतः ॥ ४६ ॥ ॥ इतिलिंगादिसंग्रहवर्गः ॥ इत्यमरसिंहकृतौनामलिंगानुशासने ॥ सामान्यकांडस्तृतीयःसांगएवसमर्थितः ॥ ४७ ॥

संहरति । इतीति । इत्येवंप्रकारेणामरसिंहस्यकृतौनामलिंगशास्त्रेसामान्यनामातृतीयःकांडः । प्रस्तावोवर्गसमूहोवाअंगैः सहितः समर्थितोनिरूपित इत्यर्थः ॥ ४७ ॥ ॥ श्रीमत्यमरविवेकेमहेश्वरेणविरचितइत्थं । सामान्यकांडएषोऽतिमःसमाप्तः ॥ विशेष्यनिघ्नवर्गस्यमूलश्लो॰ ११२ ॥ क्षे॰ श्लो॰ । संकीर्णव॰ मू॰ ४३ क्षे॰ । नानार्थव॰ २५७ क्षे॰ ७ ॥ । अव्ययव॰ मू॰ २३ । क्षे॰ । लिंगादिसंग्रहव॰ मू॰ ४७ क्षे॰ । एवंसर्वे मू॰ श्लो॰ ४८२ ॥ क्षे॰ ७ ॥ सर्वेमिलित्वा ४९० ॥



मुंबईंत

गणपत कृष्णाजी यांचे छापखान्यांत छापिला.

शके १७८३. सन १८६२.

